THE

HARIDĀS SANSKRIT SERIES

21

साहित्यव्याकरणाचार्य पण्डित श्रीरामचरित्र त्रिवेदिप्रणीतः-

# फक्किका-सरलार्थः

व्याकरणाचार्य पण्डित सदाशिवशास्त्रिणा विरचितया प्रभानाम्न्या टिप्पण्या संवलितः

THE

# PHAKKIKĀ SARALĀRTHA

By

VYĀKARAṆĀCHĀRYA

PANDIT RAMCHARITRA TRIPĀTHĪ

with Prabhā notes by

*Pandit Sadāsiva S'āstri Josh*

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Choukhamba Sanskrit Series Office,*

Vidya Vilas Press, Banaras

5 th Edition ] 1950 [ Price 1/-

श्रीगुरुर्विजयतेतराम् ॥

# भूमिका ।

श्रीमत्यस्मिन्निखिले जगतीतले वेदाङ्गाग्रगतमतिसारवत्तरं विजितसकलशब्द-तन्त्रं निखिलजगन्मण्डनायमानगीर्वाणवाणीभूषणं पाणिनीयव्याकरणं वरीवर्तीति न तिरोहितं विदुषाम् ।

परञ्च करालकलिकालवशान्मन्दैर्मन्दमतिभिर्मन्दभाग्यैरुपद्रुतैर्द्विजातिभिरति-सारवत्तया तस्मात् सकृल्लाभो दुर्धर इति परमकारुणिकैस्तत्र भवद्भिर्विद्वद्वराग्रणीभिः श्रीमत्पतञ्जलिमुनिप्रभृतिभिरद्यावध्यनेके निबन्धा निबद्धाः, येन च समेषां सम्य-ग्लाभः स्यात् ।

प्रचलन्ति चेदानीं सर्वत्र पाणिनीयव्याकरणबोधोपकारकाः सिद्धान्तकौमुदी-मनोरमाशेखरादिग्रन्थाः ।

परञ्चातिक्लिष्टेभ्यस्तेभ्यो ग्रन्थेभ्यो बालानां न सम्यग् लाभः, अतिविस्तृ-तत्वाच्च न तेषां परीक्षोपयोगी लाभः फक्किकाव्याख्या अपि बह्व्यः सञ्जाताः, ता-सामपि शेखरादिग्रन्थसंस्कृतसंवलिततयाऽन्तेवासिनां हृदयगतो यथार्थतत्त्वावबोधो न जायत इति वशंवदेन मयाऽयम्फक्किकासरलार्थो विरचितः ।

नाहं किल तादृग् बुद्धिमान् येन चैतादृशकार्यं सम्पादयेयम् । किन्त्वत्र तत्र-भवतां भवतां काशीस्थराजकीयसंस्कृतपाठशालाध्यापकानां व्याकरणकर्णधाराणां श्री १०८ व्याकरणाचार्य-देवनारायणत्रिवेदिनां गुरुचरणानां, तथा च गोयनकामहा-विद्यालयप्रधानाध्यापकानां श्री १०८ व्याकरणाचार्य-रामयशस्त्रिपाठिनां गुरुचरणाना-ञ्चायम्प्रसादः । येन च मयाऽयङ्ग्रन्थो भवतां दृष्टिपथं नीतः ।

अत्र किल परीक्षार्थिनां विद्यार्थिनाम् अल्पप्रयासेन झटिति कौमुदीस्थफक्कि-कानां बोधः परीक्षालाभश्च स्यादिति मम निश्चयः किमधिकप्रशंसया ।

अस्यावलोकनेन विद्वांसो विद्यार्थिनश्च मामलङ्करिष्यन्तीति श्रीविश्वनाथचर-णान् विदुषो विद्यार्थिगणांश्च प्रार्थये ।

अस्य ग्रन्थस्य पुनर्मुद्रणेऽपि सर्वाऽधिकारः काशीस्थविद्याविलासनामकमुद्रणालयाध्यक्ष–गोलोकवासि-श्रेष्ठिवर-बाबूहरिदासगुप्तात्मज–श्रीजयकृष्णदासमहोदयाय मयाऽदायि, तं च तेषां कनीयान् भ्राता विद्याविलासमुद्रणालयोपाध्यक्षः श्रीश्रेष्ठि-कृष्णदासमहोदयः परप्रेम्णोररीकृत्य संशोधकपट्टुश्रीसदाशिवशास्त्रिद्वारा टिप्पणी-परिष्करणपूर्वकं संशोधितवान् ।

अत्र वयं संशोधकमहोदयानां श्रीसदाशिवशास्त्रिणामुपकारान् स्मारं स्मारं श्रीजयकृष्णदासमहोदयान् श्रीकृष्णदासमहोदयांश्च धन्यवादैरभिनन्दयामः ।

ग्रन्थे नैसर्गिकमनुष्यदोषवशाद्या काचिदशुद्धिः स्यात्तां हंसक्षीरन्यायेन परिशोधयन्तु विद्वज्जना इत्यहं मुहुर्मुहुः प्रार्थये ।

विद्वज्जनकृपाभिलाषी—

रामचरित्रद्विवेदी

साहित्यव्याकरणाचार्यः ।

# निवेदनम् ।

फक्किकासरलार्थः परिष्करणपूर्वकं संशोधनार्थं श्रीकृष्णदासश्रेष्ठिमहोदयेन मयि समर्पितः । तेषां प्रार्थनातिशयेन वशंवदेन मया प्रभानाम्नी टिप्पणी विरचिता । सा विद्यार्थिनां परमोपकाराय भवेदिति मन्यते ।

विदुषामनुचरः-

जोशीत्युपाह्वसदाशिवशर्मा

# फक्किकासरलार्थस्य विषयसूची ।

इति फक्किकासरलार्थस्य विषयसूची समाप्ता ।

---

सर्वविध पुस्तकप्राप्तिस्थानम्—

जयकृष्णदास–हरिदास गुप्तः,

चौखम्बा संस्कृत पुस्तकालय,

बनारस ।

॥ श्रीः ॥

# फक्किकासरलार्थः

## प्रभानामक–टिप्पण्याऽलङ्कृतः ।

सदा शोभनन्नौमि पादारविन्दं,
गणेशस्य मातुः पितुश्चापि दिव्यम् ।
अथारभ्यते पङ्क्तिमालासमृद्धि-
र्यया छात्रबुद्धिर्विलासन्तनोतु ॥

## अथ संज्ञाप्रकरणम् ।

### लण्सूत्रेऽकारश्च(१) ।

अस्यां पङ्क्तौ मानञ्च–ऋकारलृकारयोः सवर्णसंज्ञायाम् "उरण्रपरः" इत्यनेन लृकारस्थानेऽपि रपरः स्यादिति विचारे "तुल्यास्य"सूत्रस्थलृकारस्य 'लपरत्वं वक्ष्यामि' इति भाष्यम् ।

तथाहि–'वक्ष्यामि' इति पदस्य व्याख्यास्यामीत्यर्थः कैयटेन(२)विहितः । तथाच लण्सूत्रघटकलकारस्याकारस्येत्संज्ञाकरणेन रप्रत्याहारनिर्माणेन "उरण्रपरः" इति सूत्रस्यान्तरतम्यादृकारस्थाने अण् रपरः लृकारस्थानेऽण् च लपरो भवतीत्यर्थद्वयेन न क्वाप्यनुपपत्तिरिति, अकारस्येत्संज्ञायामुक्तभाष्यम्प्रमाणम्भवतीति भावः ॥ १ ॥

### हलन्त्यम् ।

ननु अष्टाध्याय्यामेकमेव "हलन्त्यम्" इति सूत्रं पाणिनिना पठितं तत्कथं कौमुद्यां

---

(१) **अकारश्चेति** । इत इत्यनुषज्यते । तच्च एकवचनतया विपरिणम्यते । "लण्" सूत्रे लकारात्परोऽकारश्च इत्संज्ञको ज्ञेयः इत्यर्थः । (२) **कैयटेनेति** । कैयटमतेनेदं 'रप्रत्याहार' रूपव्याख्यानम् । नव्यास्तु तन्न स्वीकुर्वन्ति । "रदाभ्याम्" इत्यादिस्थले दोषात् । किन्तु वचनमेवाङ्गीकुर्वन्ति, "उरण् रपरः" इत्यत्र ऋः स्थाने योऽण् स रपरो भवति "लपरत्वं वक्ष्यामि" इत्यस्य वार्तिकरूपेण लृकारस्य स्थाने योऽण् स लपरश्च भवतीत्यर्थः ।

तदावृत्तिरिति चेन्न, "न विभक्तौ तुस्माः" इत्यादिसूत्राणां साफल्याय "हलन्त्यम्" इति सूत्रस्योपदेशेऽन्त्यं हल् इत् स्यादित्यर्थोऽवश्यं वाच्यः। तथाच "आदिरन्त्येन सहेता" इति सूत्रार्थं विना "हलन्त्यम्" इति सूत्रार्थो न स्यात्। "हलन्त्यम्" इति सूत्रार्थं विना च "आदिरन्त्येन सहेता" इति सूत्रार्थो न स्यादिति द्वयोः परस्परापेक्षत्वेनान्योन्याश्रयदोषात्। "हलन्त्यम्" इति सूत्रस्य उपदेशेऽन्त्यं हलित्स्यादित्यर्थासिद्धेः। तस्मात्तत्सूत्रावृत्त्या(१)एकस्य हल्सूत्रान्त्यमित्स्यादित्यर्थो भवति, द्वितीयस्य च, उपदेशेऽन्त्यं हलित्यादित्यर्थो भवतीति न काप्यनुपपत्तिरिति ॥ २ ॥

## आदिरन्त्येन इति।

अयम्भावः—(२)"प्रत्याहारेऽनुबन्धानां कथमज्" इत्यादिभाष्ये प्रत्याहारशब्देन वर्णसमाम्नायः कथितः।

तथाच—"अइउण्" इत्यादौ इत्संज्ञकानां ग्रहणाभावेऽपि अन्यत्रेत्संज्ञकानां वर्णानां ग्रहणे सति (३)अनुनासिकेत्यादौ यणाद्यापत्तिरिति प्रत्याहारशब्देन 'अच् अक् हल्' इत्यादय "आदिरन्त्येन" इति सूत्रेण संकेतिता गृह्यन्ते।

तथाच—अजादिप्रत्याहारेषु इत्संज्ञकवर्णानां ग्रहणं न भवतीति न कश्चिद्दोषः॥३॥

## प्रत्या(४)हारेष्वितां न ग्रहणम्।

रलयोर्मध्ये टकारस्यापि विद्यमानत्वेन रलयोः संज्ञा स्यादिति वक्तुन्न युक्तम्, अपि तु र ट लानां बोधकः स्यादित्येव कथनं युक्तमित्याशयेनाह—प्रत्याहारेष्वितामिति। अनुनासिकपदे ककाररूपाच्त्वमाश्रित्य यणादेशाभावेन प्रत्याहारेषु इत्संज्ञकानां वर्णानां ग्रहणन्न भवतीति बोध्यते ॥ ४ ॥

## ह्रस्वग्रहणमत(५)न्त्रमिति।

अयम्भावः—"तस्यादित उदात्तमर्धह्रस्वम्" इति सूत्रे ह्रस्वग्रहणस्य "उपेयिवान्" इत्यादिसूत्रे उपोपसर्गवद्विवक्षा न भवतीति ह्रस्वदीर्घप्लुतेषु सर्वत्रैवादावर्धमुदात्तं

---

(१) आवृत्त्येति। ननु तन्त्रैकशेषयोरन्यतरेणापि कार्यं स्यादिति चेदत्रोच्यते—एकशेषस्तु भाष्ये प्रत्याख्यातः। तन्त्रेणोच्चारणं भवति, बोद्धुस्तु आवृत्त्यैव बोधः इत्यादयः। **उपदेशे इति।** उपदिश्यते अनेन इति उपदेशः। करणे घञ् इति भावः। तच्च शास्त्रमेव तदेवं सङ्गृह्यते—"धातुसूत्रगणोणादि वाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥' इति। **(२) प्रत्याहार इति।** 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न" इति कात्यायनवार्त्तिके इत्यर्थः। **(३) अनुनासिकेत्यादाविति।** आदिना "तृषिमृषिकृषेः" "एकः पूर्व" इत्यादि सङ्ग्रहो बोध्यः॥ **(४) प्रत्याहारेति।** प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्र स प्रत्याहारः। **(५) तन्त्रमिति।** स्वशास्त्रसङ्केतितरूपेणाबोधनमित्यर्थः।

भवति शेषमर्धञ्चानुदात्तं भवति । अन्यथा दीर्घस्य यत्र स्वरितसंज्ञा स्यात्तत्रार्धमुदात्तं स्यात्, ह्रस्वप्लुतयोस्तु स्वरितसंज्ञायामर्धमुदात्तं न भवतीति प्राञ्चः ।

नव्यास्तु—अर्धह्रस्वशब्दोऽर्धमात्रायां रूढ इति ह्रस्वदीर्घादिषु सर्वत्रैवादौ अर्धमात्रा उदात्तो भवति, शेषभागस्त्वनुदात्तो भवतीति वदन्ति । अथ च ह्रस्वपदस्यैकमात्रारूपार्थो न विवक्षितः किन्त्वर्धमात्रारूपार्थ एव विवक्षितोऽस्तीति नवीनमते ह्रस्वग्रहणमतन्त्रमिति ग्रन्थस्यासङ्गतिरपि न भवतीति तत्त्वम् ॥ ५ ॥

## नाज्झला(१)विति ।

ननु "तुल्यास्यप्रयत्नं सवर्णम्" इति सूत्रेणाकारहकारयोः सवर्णसंज्ञायां सत्यां विश्वपाभिरित्यत्र "होढः" इति ढत्वं कथं न स्यादिति चेन्न, "नाज्झलौ" इति निषेधात् । न च पञ्चधामहावाक्येन "नाज्झलौ" सूत्रविषये "अणुदित्" सूत्राप्रवृत्त्या "नाज्झलौ" इति सूत्रेण ह्रस्वाकारस्यैव सवर्णसंज्ञा निषिद्धा भवतीति वाच्यम् । "नाज्झलौ" इत्यत्र दीर्घाकारस्यापि प्रश्लिष्टत्वात् । प्रश्लेषे मानञ्च "कालसमयवेलासु तुमुन्" इति सूत्रम् । अन्यथा तत्र षत्वापत्तिर्दुर्वारा स्यात् ।

पञ्चधामहावाक्यञ्च वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्संज्ञोत्तरकाला प्रत्याहारसिद्धिः, तदुत्तरकाला सवर्णसंज्ञा, तदुत्तरं "नाज्झलौ" इति निषेधः, तदुत्तरं ग्राहकताशक्तिरेतेन सर्वेण समुदितेनान्यत्र सवर्णानां ग्रहणं भवति, न स्वस्मिन्नापि स्वाङ्गे इति ।

न च प्लुताकारप्रश्लेषाभावात् 'हे यियासो' इत्यादौ षत्वं दुर्वारं स्यादिति वाच्यम् ? प्रयत्नभेदेन "नाज्झलौ" इत्यस्य प्रत्याख्यानात् । प्रत्याख्यानपक्षे सूत्रारम्भपक्षे च यदा फलैक्यं भवति तदा प्रत्याख्यानं युक्तम्भवति, अथ च यदा पक्षद्वये फलभेदस्तदा प्रत्याख्यानं युक्तन्न भवतीति, प्रत्याख्यानपक्षे सर्वेषामकाराणां सवर्णसंज्ञा न भवति, अथ च सूत्रारम्भपक्षे ह्रस्वदीर्घयोर्द्वयोरेव सावर्ण्यनिषेधो भवतीति प्रत्याख्यानपरकभाष्यासङ्गत्या सूत्रारम्भपक्षेऽपि सर्वेषामकाराणां सवर्णसंज्ञा न भवतीति भावः ॥ ६ ॥

---

(१) नाज्झलाविति । ननु अच्च हल् च अज्झलौ इति चेन्न । "कालसमयवेलासु" इतिनिर्देशाद् आकारस्यापि प्रश्लेषात् । अत्र तर्हि त्रयाणामितरेतरद्वन्द्वे बहुवचनापत्तिः । समाहारे तु एकत्वापत्तिः । यदि आकारस्य अचश्च समाहारस्तदनन्तरमितरेतरयोगः, तदा "द्वन्द्वाच्चुदषहान्तात्समाहारे" इत्यनेन टजापत्तिः । यदि 'अच् च हल् च' इति समाहारे आकारेण साकमितरेतरयोगस्तदा आकारस्य अचश्च सावर्ण्यं न स्यात् अत आह मूले—आकारेण सहित इति ।

## अत्राण् परेण णकारेण ।

अत्र मानञ्च-"उरृत्" इति सूत्रे तका(१)रोच्चारणम्, पूर्वेण णकारेण अण्प्रत्याहारे तु ऋकारस्याण्प्रत्याहारे पाठाभावेन दीर्घऋकारादेरप्रसक्तौ तकारोपादानं व्यर्थमेव, तदेव व्यर्थं सत् 'अणुदित्' सूत्रेऽण्प्रत्याहारः परणकारेणेति बोधयति । तकारोपादानाभावे तु "अणुदित्" सूत्रप्रवृत्त्या दीर्घऋकारोऽपि स्यादिति स्वांशे चरितार्थम् ॥ ७ ॥

## एदै(२)तोरोदौतोश्चेति ।

ननु "तुल्यास्य"सूत्रेण एकारैकारयोः, ओकारौकारयोश्च सवर्णसंज्ञा कथन्न स्यात्? इति चेन्न । "ऐऔच्" इति सूत्रारम्भसामर्थ्यात् ।

न च सूत्राभावे "एचोऽयवायावः" इत्यत्र प्रत्याहारासिद्धिरिति वाच्यम्, एङोऽयवायाव' इति न्यासात् । एवं "नय्वाभ्याम्" इति सूत्रे ऐचः स्थाने ऐऔ, इति स्वरूपेणैव पाठ्याविति भावः ॥ ८ ॥ इति संज्ञाप्रकरणम् ।

---

# अथ स्वरसन्धिः ।

## वान्त इत्यत्रेति ।

ननु गव्यं नाव्यमित्यादौ पदत्वेन "लोपः शाकल्यस्य" इति सूत्रेण वकारस्य लोपः कथन्नेति चेन्न, 'वान्त' इत्यत्र वकारप्रश्लेषेण श्रूयमाणवकारादेशविधानात् । अथ च यदि पदत्वबाधकेन भत्वेन गव्यमित्यादौ लोपाप्रसक्तिस्तदा गव्यूतिरित्यादौ वकारलोपाभावार्थं "गोर्यूतौ छन्दस्युपसंख्यानम्" इति वार्तिके छकारात्पूर्वं वकार (३)-प्रश्लेषो बोध्यः । तथा च तत्सामर्थ्यात्तत्र वलोपाभाव इति ॥ ९ ॥

## तन्निमित्तस्यैवेति किम् ।

अयम्भावः—यत्र यादिप्रत्ययनिमित्तको धातोरेच् भवति, तत्रैव वान्तादेशो भवति । ओयते इत्यत्र तु 'वेञ् धातोः' कर्मणि लटि यकि सम्प्रसारणे च कृते आङा सहैकादेशो जातः । ततश्च यादिप्रत्ययनिमित्तक एच् नास्ति, किन्तु गुणनिमित्तकः । अतोऽत्र वान्तादेशवारणाय तन्निमित्तस्यैवेति कर्तव्यम् ।

---

(१) **तकारोच्चारणमिति ।** इदं प्रमाणं न मनोरमम्, लकारग्रहणेन चारितार्थ्यात् । तर्हि अत्र भाष्यकाराणां व्याख्यानमेव शरणमिति बोध्यम् । (२) **एतैदोरिति ।** प्रयत्नभेदेनापि एतयोः सावर्ण्यं नास्तीति ज्ञेयम् । प्रयत्नभेदश्च "तुल्यास्य" सूत्रे शेखरे स्पष्टः । (३) **वकारप्रश्लेष इति ।** गव्यूतिरिति अत्र वकारप्रश्लेषस्य न फलम् । छन्दसि सर्वविधीनां व्यवस्थितत्वात् । अध्वपरिमाणेऽपि संज्ञाशब्दोऽयम् । तत्र संज्ञात्वभङ्गापत्तेर्न वलोपः इति भावः ।

के(१)षाञ्चिन्मते धातूपसर्गयोः कार्यं बहिरङ्गं भवति, इति वान्तादेशे कर्त्तव्ये गुणोऽसिद्ध एवेति औयतेत्यत्र वान्तादेशवारणार्थं नियमभूतसूत्रं कर्त्तव्यम् ॥ १० ॥

## कानि सन्ति ।

ननु कानि(२)सन्ति कौस्त इत्यादौ "अचः परस्मिन्" इति सूत्रेण स्थानिवद्भावादकाररूपात्त्वमाश्रित्य यणावादेशौ कथन्न भवतः? इति चेन्न, यणादिरूपपदचरमावयवकार्ये कर्त्तव्ये "न पदान्त" सूत्रेण स्थानिवद्भावनिषेधात् ॥ ११ ॥

## कृष्णर्द्धिः ।

अयम्भावः-अकारवृत्तिकण्ठस्थानजन्यत्वरूपधर्मस्याकाररूपे गुणे विद्यमानत्वेऽपि ऋकारवृत्तिमूर्धस्थानजन्यत्वरूपधर्मस्य क्वापि न गुणेऽविद्यमानत्वात् ऋकारस्थाने सर्वेषां गुणशब्दवाच्यानामकारादीनां प्रसक्तौ "उरण् रपरः" इति शास्त्रसहकारेण ऋकारस्थाने जायमानोऽकारो (३) रपरः सन्नेव प्रवर्तते, इति वाक्यार्थे जाते पूर्वं अर् रूपे सिद्धे कण्ठस्थानजन्यत्वरूपधर्मस्य मूर्धास्थानजन्यत्वरूपधर्मस्य च अकारऋकाररूपस्थानिनि अर्रूपादेशे च विद्यमानतया "स्थानेऽन्तरतमः" इति परिभाषया आन्तर्यं सुलभमिति कृष्णर्द्धिरित्यत्रारादेशः सिद्धः । रूपे भेदास्तु मूले स्फुटाः ॥ १२ ॥

## अर्थ(४)वद्ग्रहणे ।

ननु प्रोढवानित्यत्र "प्रादूहो" इति वार्तिकेन वृद्धिः कथन्नेति चेन्न, अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषया निषेधात् । परिभाषायाम्मानञ्च, "व्रश्च" इति सूत्रे राजेः पृथग्भ्राजिग्रहणम् । यदि सार्थकानर्थकयोर्द्वयोरपि शास्त्रे ग्रहणम्भवति, तदा भ्राजघटकस्यापि राजपदस्य राजग्रहणेन ग्रहणं स्यादेवेति भ्राजशब्दोच्चारणं व्यर्थमेवेति भावः ॥ १३ ॥

## अचि(५)किम् ।

ननु अज्ग्रहणानुवर्तनाभावेऽपि 'कुमारी शेते' इत्यत्र "नाज्झलौ" इत्य-

---

(१) नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति परिभाषया निषेधान्नात्रान्तरङ्गबहिरङ्गभाव इत्याशयेनाह—**केषामिति । (२) कानि सन्तीति ।** वाक्यसंस्कारपक्षे इदं ज्ञेयम् । पदसंस्कारपक्षे पूर्ववत्त्वेन दृष्टत्वाभावान्न तत्प्रसक्तिरिति भावः । **(३) रपर इति ।** अत्र रप्रत्याहारो विवक्षितः। ततश्च रेफशिरस्कः लकारशिरस्कश्च प्रवर्तत इति लभ्यत इति भावः । **(४) अर्थवद्ग्रहणे इति ।** "स्वं रूपं शब्दस्याशब्दसंज्ञा" इत्येतत्सूत्रमूलकैवेति भावः । स्पष्टञ्चेदं शेखरमनोरमयोरिति । **(५) अचि किमिति ।** पूर्वं वर्णानामुपदेश इत्यादिभाष्योक्तरीत्या 'तुल्यास्यप्रयत्नं सवर्णम्" "नाज्झलौ" इत्येताभ्यां प्राक् ग्रहणकशास्त्रस्यासिद्ध्या "नाज्झलौ" इत्यस्य वाक्यार्थबोधावसरे अच्पदेन वर्णसमाम्नायस्थानां ह्रस्वानामेव ग्रहणात्तेषामेव सवर्णसंज्ञानिषेधेन दीर्घाणां हल्भिः सावर्ण्यं स्यादेवेत्याशयेनाह—**कुमारी शेते इति ।**

नेन ईकारशकारयोः सावर्ण्यनिषेधान्न दीर्घापत्तिरिति चेन्न। "अणुदित्" सूत्रस्य पञ्चधामहावाक्योत्तरमेव प्रवृत्त्या ह्रस्वेकारेण दीर्घेकारस्याबोधादत्र निषेधाप्रवृत्तेः, तस्माद्दीर्घनिवृत्त्यर्थम्" अकः सवर्णे दीर्घः" इति सूत्रे अच्पदानुवृत्तिः कर्त्तव्यैवेति ॥ १४ ॥

## ऋति(१)सवर्णे ।

अयम्भावः—एतद्वार्तिकद्वयविधेयऋकारयोर्द्वौ रेफौ द्वौ लकारौ च स्तः, इत्यत्र भाष्यम्प्रमाणम्। तथाहि—ऋकारद्वयस्थाने रेफद्वयवत्तासाम्येन रेफद्वयविशिष्टऋकारस्य सिद्धिः। विवृतस्वरूपसाम्येन च दीर्घऋकारस्य सिद्धिः।

अथ च ऋकारऌकारयोः स्थाने लकारवत्तासाम्येन लकाराविशिष्टहोत्ऌकार इति रूपस्य सिद्धिः। लकारद्वयञ्चात्र ऋकारे हल्द्वयवत्स्वरूपसाहचर्येण बोध्यम्। ऌकारस्य दीर्घाभावेन विवृतत्वरूपसाम्येन रेफवत्तारूपसाम्येन च होतृकार इतिरूपस्य सिद्धिरिति "अकः सवर्णे दीर्घः" इत्यनेनैव रूपद्वयसिद्धौ "ऋति सवर्णे ऋ वा" इत्यादिवार्त्तिकद्वयं भाष्ये प्रत्याख्यातम्। एवञ्च वार्तिकाभावे रेफद्वयवत्त्वं सिद्धमिति वार्तिकसत्तायामपि रेफद्वयवत्त्वं सिद्धम्भवति। इत्थञ्चाभितोऽज्भागेऽपि भाष्यमेव मानम्। भाष्यन्तु विस्तारभयान्न लिख्यते।

इमौ ऋकारऌकारौ ईषत्स्पृष्टप्रयत्नवन्तौ स्तः। अन्यथा "अकः सवर्णे दीर्घः" इत्यनेनैव दीर्घे विवृतस्वरूपप्रयतनं सिद्धम्भवति ॥ १५ ॥

## अतीति निवृत्तम् ।

अत्र मानञ्च-पूर्वस्मिन्नेव सूत्रे विभाषाग्रहणं निवृत्तमिति। "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रस्थं भाष्यमेव। तथाहि—"द्वन्द्वे च" इति सूत्रारम्भसामर्थ्यादेव नित्यमवङादेशो भविष्यतीति, "अवङ् स्फोटायनस्य" इति सूत्रेण पाक्षिकावङादेशाभावार्थम् "इन्द्रे च" इति सूत्रे नित्यग्रहणन्न कर्तव्यमिति भावः। [यदि "अवङ् स्फोटायनस्य" इति सूत्रस्याकारे परे प्रवृत्तिः स्यात्तर्हि गवेन्द्र इत्यादौ अकाराभावेन कथं विकल्पादेशस्याशङ्का समुत्पन्ना भवति ॥ १६ ॥

## वत् किम् ।

यदि "अप्लुतवदुपस्थिते" इति । सूत्रे वत्ग्रहणञ्च क्रियते, तदा हे अग्नि ३ इति, इत्यादौ प्लुतसंज्ञा प्रगृह्यसंज्ञा च भवति। तथा च प्रगृह्यसंज्ञाफलं प्रकृतिभावः, प्लुतसंज्ञाफलञ्च तदुच्चारणम्। एवञ्च प्लुतोच्चारणं न सिध्येत्। कृते

(१) सवर्णे इति। "ऋति ऋ वा।" "ऌति ऌ वा" इत्येव वार्तिकद्वयम्। अत्र "अकः सवर्णे दीर्घः" इत्यस्मात्सूत्रात् 'सवर्णे' इत्यनुवर्तते इति बोध्यम्।

तु वद्ग्रहणे प्लुतकार्यं न भवति, उच्चारणं तु प्लुतस्य भवत्येवेति भावः ॥ १७ ॥

## रामकृष्णावमू आसाते ।

स्त्रीलिङ्गे नपुंसलिङ्गे च "ईदूदेद् द्विवचनं प्रगृह्यम्" इति सूत्रदृष्ट्या मुत्वस्यासिद्धत्वेन 'अदे' इति रूपे जाते पूर्वसूत्रेणैव प्रगृह्यसंज्ञा सिद्धा भवतीति रामकृष्णौ पदस्योच्चारणं पुंल्लिङ्गनिर्देशार्थम् । तथा च—तत्र मुत्वस्यासिद्धत्वेऽपि अदाविति रूपं भवति, न तु अदे इति । एवञ्च नास्ति पूर्वसूत्रप्रवृत्तिरिति तत्सिद्ध्यै "अदसो मात्" इति सूत्रे उकारानुवृत्तिरपि कर्त्तव्या ॥ १८ ॥

## मात् किम् ।

माद्ग्रहणभावे 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषया "ईत् ऊत् एत्" इति सूत्रादीकारादीनां त्रयमाणामनुवृत्तिः स्यादिति अमुकेऽत्रेत्यत्रापि प्रगृह्यसंज्ञा स्यादिति तन्निवारणार्थम् "अदसो मात्" इति सूत्रे माद्ग्रहणम् । कृते तु माद्ग्रहणे मकारात्परस्य एकारस्यासम्भवादेकारानुवृत्तिर्नायातीति भावः ॥ १९ ॥

## वत्वस्यासिद्धत्वात् ।

वकारस्यासिद्धत्वेन हल्परत्वाभावात् किम्वुक्तमित्यत्र नानुस्वारः, असिद्धार्थमेवेदं वत्वविधायकं शास्त्रं त्रिपाद्यामाचार्येण पठ्यते, "निपात एकाजनाङ्" इति सूत्रविहितप्रकृतिभावबाधनमेव यदि सूत्रस्य प्रयोजनमस्ति, तदा "इको यणचि" इत्यनन्तरं "मय उञो वा" इत्येवाचार्योऽपठिष्यत्, यणश्चानुवृत्तिमकरिष्यत्, तथाऽऽचार्येण न कृतमिति तत्फलमसिद्धमेवेति भावः ॥ २० ॥

## अर्थग्रहणं किम् ।

अयम्भावः–अर्थग्रहणाभावेऽपि ईदूदंशे सप्तमीविशेषणत्वेन प्रत्ययांशे च तदादिविशेषणत्वेन तदन्तविधिद्वयसत्त्वेन, ईदूदन्तं यत्सप्तम्यन्तं तदादि, तत्प्रगृह्यसंज्ञं स्यादित्यर्थेनैवेष्टसिद्धिः, अर्थग्रहणं व्यर्थमेव "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति" इति निषेधस्तु न । 'ईदूतौ सप्तमी प्रगृह्यम्' 'अदसः' 'एच्चद्विवचन'मित्येव सूत्रयितव्ये गुरुभूतन्यासकरणसामर्थ्यात् । यथी पपीत्यादौ परादिवद्भावेन सप्तमीत्वमादाय सूत्रसाफल्येऽपि ऊकारांशेऽसम्भवाच्च । तदेवार्थग्रहणं व्यर्थं सत् सप्तम्यर्थमात्रे पर्यवसन्नमित्याद्यर्थज्ञापनार्थम् । तत्वञ्च सप्तम्यर्थनिरूपितशक्तिपर्याप्त्यधिकरणत्वम् । गौरी अधिश्रित इत्यादौ 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन सप्तम्यर्थमात्रे पर्यवसन्नत्वमस्त्येवेति तत्र प्रगृह्यसंज्ञा सिद्धा भवति । वाप्यश्व इत्यादौ च समासे समुदाये शक्तिस्वीकारेण सप्तम्यर्थमात्रे पर्यवसन्नत्वा-

भावान्न प्रगृह्यत्वप्राप्तिरित्याशयेनाह—अर्थग्रहणं किमिति। वाप्यश्व इति समुदायेन वाप्यधिकरणकाश्व इत्यर्थोऽभिधीयते न तु केवलस्य वापीशब्दस्य वाप्यधिकरणमित्येवार्थो भवति, किन्तु अधिकरणादधिकस्याश्वरूपस्याप्यर्थस्याभिधानम्भवति वापीशब्देन इति वापीशब्दः सप्तम्यर्थमात्रे नहि समाप्तिं लभत इति ॥ २१ ॥ इति स्वरसन्धिः ।

## अथ हल्सन्धिः ।

### टोः(१) किम् ।

ननु "तोः षि"इति निर्देशेन "क्वचिदेकदेशोऽप्यनुवर्तत" इति परिभाषया "ष्टुना" इति सूत्रात् 'टु' मात्रस्यानुवृत्तौ पदान्ताट्टवर्गात्परस्येत्याद्यार्थेनैवेष्टसिद्धिरिति टोर्ग्रहणं व्यर्थमेव तदेव व्यर्थं सदुक्तपरिभाषाया अनित्यत्वं ज्ञापयति। तथा च—टोर्ग्रहणाभावे सन्नियोगशिष्टानामिति परिभाषया ष्टुरिति समुदायस्यानुवृत्तौ पदान्ताभ्यां षकारटवर्गाभ्यां परस्येत्याद्यर्थे सर्पिष्टममित्यत्रापि ष्टुत्वनिषेधः स्यादिति तद्वारणाय टोर्ग्रहणं कार्यमिति ॥ २२ ॥

### स्थानप्रयत्नाभ्यामिति ।

भाष्यकृता "स्थानेऽन्तरतम उरण् रपर" इति संहितापाठे 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठः, अहोस्वित् 'स्थानेऽन्तरतमः' इति प्रथमान्तपाठः, इति शङ्कितम्। अनन्तरञ्च सप्तम्यन्तपाठे यत्र स्थानिनि स्थानप्रयत्नद्वयरूपसाम्यं स्यात्तत्रैवानुनासिकः स्यात्। तथा च 'षण्मुखः' इत्यादौ स्पृष्टप्रयत्नस्य मूर्धस्थानजन्यत्वस्य च णकाररूपादेशे डकाररूपस्थानिनि च विद्यमानतया "यरो(२)ऽनुनासिकेऽनुनासिको वा" इति सूत्रं प्रवर्तते, 'चतुर्मुख' इत्यत्र तु प्रयत्नाभावान्नानुनासिकप्रवृत्तिरित्याशयेनाह—स्थान प्रयत्नाभ्यामिति।

परञ्च, "इको यणचि" इत्यादिसूत्रविषये मात्राद्वयन्यूनकालिकत्वे सति तालु-

(१) **टोः किमति।** ननु सर्पिष्टममित्यत्र षकारस्य पदान्तत्वाज्जश्त्वे षकारानुवृत्तावपि पदान्ते टवर्गस्यैव लाभः इति चेन्न। "ह्रस्वात्तादौ तद्धिते" इति सूत्रविहितषत्वस्यासिद्धत्वाज्जत्वाभावात्पदान्ते न टवर्गः किन्तु षकार इति तत्र दोषादिति भावः। (२) **यरोऽनुनासिक इति।** ननु 'मदोदग्राः ककुद्मन्तः' इत्यत्र ककुदो दकारस्य पदान्तत्वात् "प्रत्यये भाषायाम्" इत्यनेनानुनासिके "न्मन्तः" इति भवितव्यं कथं ककुद्मन्तः इति। अत्रोच्यते-यवादिगणे दकारस्य निपातनान्नानुनासिकः इति। अथवा "तसौ मत्वर्थे" इत्यस्मिन्सूत्रे संहितापाठे दकारस्यापि प्रश्लेषेण दान्ततान्तसान्तस्य भसंज्ञा। तेन प्रकृते भसंज्ञया पदसंज्ञाया बाधान्न दोष इति भावः।

स्थानजन्यत्वरूपधर्मस्य यकाररूपादेशे ह्रस्वेकाररूपस्थानिनि च सत्त्वात् दध्यत्रेत्यादौ ह्रस्वस्थान एव यणादेशः स्यान्न तु सुद्ध्युपास्य इत्यादौ ।

इत्थञ्च सप्तम्यन्तपाठमनादृत्य प्रथमान्तपाठः सिद्धान्तितः । प्रथमान्तपाठे च ईषत्स्पृष्टप्रयत्नस्य णकारेऽसम्भवान्मूर्धस्थानजन्यत्वरूपधर्मो गृह्यते । ततश्च मूर्धस्थानजन्यत्वरूपधर्मस्य रेफे णकारेऽपि च सत्त्वादनुनासिकस्य प्राप्तिरिति "अनुस्वारस्य ययि परसवर्णः" इति सूत्रात्सवर्णपदमनुवर्त्य पदान्तस्य यरोऽनुनासिके परे सवर्णानुनासिकः स्यादिति सूत्रार्थे "रेफोष्मणां सवर्णा न सन्ति" इति भाष्येण रेफस्य सावर्ण्याभावाण्णत्वाभावः ॥ २३ ॥

## गम्यते ।

ननु "नश्चापदान्तस्य झलि" इति सूत्रे मकारानुकर्षणार्थकचकारेणापदान्तस्य मस्यानुस्वारश्चेत्तर्हि झल्येवेति नियमादेव गम्यत इत्यत्रानुस्वारो न भविष्यतीति चेन्न । यत्र यत्र शुद्धनियमस्तत्र तत्र विपरीतनियमः, एवञ्च झलि परतोऽनुस्वारश्चेत्तर्हि, अपदान्तस्यैव मस्येति हरिं वन्दे इति मूल एवानुस्वारापत्तेः । एवञ्च "उञि च पदे" इत्यतः पदानुवृत्तिः कार्या ॥ २४ ॥

## संस्कर्ता ।

अयम्भावः—सम्–स्कर्ता, इति दशायां "समः सुटि" इति रुत्वे "अत्रानुनासिकः पूर्वस्य तु वा" इत्यनुनासिके "अनुनासिकात्परोऽनुस्वारः" इत्यनुस्वारे विसर्ग (१) "संपुंकानां सो वक्तव्यः" इति सत्वे द्विसकारकरूपद्वयम् । "समो वा लोपमेके" इति भाष्येण मकारस्य लोपे लोपस्यापि रुप्रकरणस्थत्वेनानुनासिकानुस्वारयोः कृतयोः सतोरेकसकाररूपद्वयम् । द्विसकाररूपद्वये अनुस्वारस्याकारोपरि पाठेनाच्त्वात् "अनचि च" इति सकारस्य द्वित्वे त्रिसकारकरूपद्वयम् । एवञ्चानुस्वारघटितत्रीणि रूपाणि, अनुनासिकघटितत्रीणि रूपाणि चेति सिद्धम् । तत्रानुनासिकयुक्तानां त्रयाणां "शरः खयः" इति ककारस्य द्वित्वे षट्रूपाणि अनुस्वारवतां त्रयाणाम् अनुस्वारस्य शर्प्रत्याहारे पाठेन शर्प्रत्याहारश्च यर् प्रत्याहारेऽन्तर्गत इति "अनचि च" इति अनुस्वारस्य द्वित्वे वार्तिकेन ककारस्य च द्वित्वे द्वादशरूपाणि संकलनयाष्टादशरूपाणि । तेषु "अचो रहाभ्याम्" इति तकारस्य द्वित्वे "यणो मयो द्वे वाच्ये" इति पुनस्तकारस्य द्वित्वे चतुष्पञ्चाशद्रूपाणि । "अणोऽप्रगृह्यस्यानुनासिकः" इति प्रगृह्यत्वेऽष्टोत्तरशतं रूपाणि ॥ २५ ॥

---

(१) **सम्पुंकानामिति** । सम् , पुम् , कान् एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः । अनेन वार्तिकेन अत्र विसर्गस्य नित्यमेव सत्त्वम् । अन्यथा "वा शरि" इति स्यादिति भावः ।

## ख्याञादेशो न ।

अयम्भावः—चक्षधातोर्ल्युट्प्रत्यये "चक्षिङः ख्याञ्" इति ख्याञादेशे ख्यान-मिति रूपं सिद्धम् । तथाच—"चक्षिङः ख्याञ्" सूत्रे भाष्ये 'क्शादिरयमादेशः' इत्युक्तम् । एवञ्च ख्याञादेशो न भवति, किन्तु क्शाञादेशो भवति "शस्य यो वा" इति वार्तिकञ्चासिद्ध(१)काण्डे पठितम् । तथाच–शकारस्थाने यो हि जातो यकारः स अन्यस्मिन् कार्ये कर्तव्येऽसिद्धो भवति ।

एवञ्च "पुमः खय्यम्परे" इति रुत्वे कर्तव्ये यकारस्यासिद्धत्वेन शकार एवोपलभ्यते, ततश्च शकारस्याम्प्रत्याहारे पाठाभावेन अम्परकखय्प्रत्याहारपरत्वाभावात् "पुमः खय्यम्परे" इति सूत्रप्राप्तिरेव नास्तीति, "ख्याञादेशो न" इति वचनमपूर्वं न, किन्तु फलितमेव । तथा च रुत्वाभावे सकारस्य लोपे पुंख्यानमिति सिद्धम् ॥ २६ ॥

## चाद् विसर्गः ।

"कुप्वोः≍क≍पौ च" इति सूत्रं यत्र यत्र प्रवर्तते तत्र तत्र सर्वत्रैव "विसर्जनीयस्य सः" इति सूत्रं प्रवर्तते । "शर्परे विसर्जनीयः" इति सूत्रन्तु "कुप्वोः" इति सूत्रविषये सर्वत्र न प्रवर्तते, इति "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इति न्यायेन "विसर्जनीयस्य सः" इति सूत्रस्यैव बाधकं "कुप्वोः" इति सूत्रम्भवति । न तु "शर्परे विसर्जनीयः" इति सूत्रस्य । एवञ्च वासः क्षौममित्यादौ विसर्ग इति ॥ २७ ॥ इति हल्सन्धिः ।

---

# अथ विसर्गसन्धिः

## मातुः कृपा ।

अयमाशयः—"इदुदुपधस्य चाप्रत्ययस्य" इति सूत्रेण भ्रातुष्पुत्रः इत्यत्रापि षत्वसिद्धौ भ्रातुष्पुत्रशब्दस्य कस्कादिषु पाठो निष्फलः । तदेव व्यर्थं सत् एका(२)देशशास्त्रनिमित्तकस्य विसर्गस्य षत्वन्न भवतीति ज्ञापयति । तेन मातुः कृपेत्यत्र षत्वाभावः सिध्यति । न च "षत्वतुकोरसिद्धः" इति सूत्रेणैकादेशशास्त्रस्यासिद्धत्वात्कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठः सफल इति वाच्यम् । पदान्तपदाद्योरेवैकादेशशास्त्रस्यासिद्धत्वात् ॥ २८ ॥

---

(१) असिद्धकाण्डे इति । "पूर्वत्रासिद्धम्" इत्यसिद्धकाण्डे—"रषाभ्यां नो णः समानपदे" इति णत्वविध्यनन्तरम् "क्शाञः शस्य यो वा" इति पठितमिति भावः ॥

(२) एकादेशेति । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रनिमित्तकत्वमिति भावः ।

## (१) चतुष्कपालः ।

"सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्" इति परिभाषया सुजन्ताभ्यां द्वित्रिशब्दाभ्यां साहचर्यात्सुजन्तस्यैव चतुःशब्दस्यापि ग्रहणम्भविष्यतीति चतुष्कपाल इत्यत्र सुजन्तत्वाभावाद् विकल्पषत्वाप्राप्तौ कृत्वोऽर्थग्रहणं व्यर्थम् । तदेव व्यर्थं सत् साहचार्यं सर्वत्र नियामकन्न भवतीति बोधयति । तेन "दीधीवेवीटाम्" इति सूत्रे दीधीवेवी, इति धातुद्वयसाहचर्येऽपि इट गताविति धातोर्ग्रहणन्न भवति किन्तु आगमस्यैवेटो ग्रहणं भवतीति फलम्बोध्यम् ॥ २९ ॥

## कस्कादिषु सर्पिष्कुण्डिका ।

ननु "नित्यं समासेऽनुत्तरपदस्थस्य" इति सूत्रेण सर्पिष्कुण्डिकेत्यत्रापि षत्वसिद्धौ कस्कादिषु तस्य पाठो व्यर्थ एवेति चेन्न । असमासे व्यपेक्षाविरहेऽपि 'आनय सर्पिष्कुण्डिका तिष्ठति, इत्यादौ षत्वार्थं सर्पिष्कुण्डिका शब्दपाठस्य(२) सफलत्वात् । व्यपेक्षायां नित्यार्थत्वाच्च(३) ।

न च कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽव्यपेक्षायां चरितार्थ इति व्यपेक्षायां कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्यासिद्धत्वेन "इसुसोः सामर्थ्ये" इत्यनेन विकल्प एव स्यादिति वाच्यम् । प्रत्ययरूपो यो विसर्गो न भवतीत्याद्यर्थेनात्र प्रत्ययरूपविसर्गस्याभावेन व्यपेक्षाविरहे "इदुदुपधस्य" इति सूत्रस्यैव प्राप्तेः । प्रत्ययसम्बन्धिभिन्नविसर्गस्येत्यादिसिद्धान्तार्थे तु अत्र विसर्गस्य प्रत्ययसम्बन्धित्वेन व्यपेक्षाविरहे "इदुदुपधस्य" इति सूत्राप्रवृत्तौ कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य तत्र चारितार्थ्येन व्यपेक्षायां विकल्पषत्वं भवत्येव ॥ ३० ॥ इति विसर्गसन्धिः ।

---

# अथ स्वादिसन्धिः ।

## अप्लुतादिति किम् ?

अयम्भावः—अप्लुतादिति विशेषणाभावे 'एहि(४) सुस्रोत ३ अत्र स्नाहि' इति

---

( १ ) **चतुष्कपाल इति** । चतुर्षु कपालेषु संस्कृतः पुरोडाशः 'चतुष्कपालः' अत्र 'संस्कृतं भक्षाः" इत्यण् "द्विगोर्लुगनपत्ये" इति लुक् । **(२) सफलत्वादिति** । तत्र असमासत्वात् "नित्यं समासेऽनुत्तरपदस्थस्य" इति न भवति, सामर्थ्याभावाच्च "इसुसोरसामर्थ्ये" इति न भवतीति भावः । **( ३ ) नित्यार्थत्वाच्चेति** । तत्र "इसुसोः सामर्थ्ये" इति विकल्पप्राप्तौ नित्यषत्वार्थं कस्कादिषु पाठ इति भावः ॥ **( ४ ) एहीति** । सुस्रोतस् शब्दः कस्यचित्संज्ञा । सम्बुद्धेः "हल्ङ्याब्भ्य" इति लोपः, 'दूराद्धूते च" इति टेः प्लुतः, सस्य रुः । सुस्रोतस् अत्रेति प्लुतात्परस्य रोः उत्वनिवृत्तये अप्लुतादिति पदमित्यर्थः ॥

प्रयोगो प्लुताकारात्परस्य रुत्वस्योत्वं स्यादिति तन्निवारणार्थं तत्कर्तव्यम् । न चाप्लुतादिति विशेषणाऽभावेऽपि अत ग्रहणेन ह्रस्वाकार एव गृह्यते इति नात्रोत्वं स्यादिति वाच्यम् । प्लुतस्यासिद्धत्वेनातः परत्वात् । अप्लुतादिति कृते तु तत्सामर्थ्यान्नासिद्धत्वम् । यदि प्लुतोऽसिद्धः स्यात्तदाऽसर्वत्रैवाप्लुताकार एवोपलभ्येतेति, अप्लुतादिति विशेषणमेव व्यर्थं स्यात् । एवञ्च तपरकरणं दीर्घाकारात्परस्य रुत्वस्योत्ववारणेन चरितार्थमिति तपरकरणसामर्थ्यान्नात्रोत्वमिति न शङ्कनीयम् ॥ ३१ ॥

## अशि किम् ।

ननु देवार् इति दशायां "भो भगो" इति सूत्रेण यत्वे "खरवसानयोः" इति सूत्रेण विसर्गे च प्राप्ते विसर्गविधायकशास्त्रदृष्ट्या यत्वविधायकसूत्रस्यासिद्धत्वेन विसर्ग एव भविष्यतीति किम् अशि ग्रहणेनेति चेन्न । विसर्गे कृतेऽपि स्थानिवद्भावेन विसर्गं रुत्वमानीय पुनरपि यत्वापत्तेः । न च "अनल्विधौ" इति निषेधात्स्थानिवद्भाव एव न भविष्यतीति वाच्यम् ? रुत्वधर्मस्यालमात्रवृत्तित्वाभावात् ॥ ३२ ॥

## अ(१) जर्घाः ।

ननु 'ढ्लोपे' इति सप्तमीनिर्देशात् "तस्मिन्" इति परिभाषया पूर्वांशोपस्थित्या पुनर् रमत इत्यादौ पूर्वस्यैव दीर्घो भविष्यतीति किं पूर्वग्रहणेनेति चेन्न, पूर्वग्रहणाभावे "अलुगुत्तरपदे" इति सूत्रादुत्तरपदानुवृत्त्या नीरक्तं दूरक्तमित्यादिसमासस्थान एव दीर्घो भविष्यतीति पुना रमते लीढ इत्यादौ दीर्घासिद्धेः । तस्मात्पूर्वग्रहणं कर्त्तव्यम् , कृते तु पूर्वग्रहणे तत्सामर्थ्यादुत्तरपदानुवृत्तौ समासेऽसमासे च सर्वत्रैव दीर्घः सिध्यतीति भावः ॥ ३३ ॥ इति स्वादिसन्धिः ।

---

# अथाजन्तपुँल्लिङ्गाः ।

## समासग्रहणं किम् ।

अयम्भावः—"प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया राजन् ङस् पुरुष सु इति समुदायघटकराजन् ङस् इत्यस्य पुरुष सु इत्यस्य च प्रत्ययान्ततदादित्वेऽपि राजन् ङस् पुरुष सु, इति समुदायस्य प्रत्ययान्ततदादिभिन्नत्वात् "अर्थवत्" इति सूत्रेणैव प्रातिपदिकसंज्ञासिद्धौ समासग्रहणं व्यर्थं सत् यत्र समुदाये पूर्वो भागः पदं तस्य समुदायस्य प्रातिपदिकसंज्ञा चेत्तर्हि समासस्यैवेति नियमयति । तेन गामानयेति वाक्यस्य प्रातिपदिकसंज्ञा न भवतीति फलम् ।

---

(१) अजर्घा इति । अयमत्र सङ्ग्रहः—"गृधेर्यलोपे लङि सेरिलोपे हल्ङ्यादिलोपे रपरे गुणे च । भष्भावजश्त्वे च रुरेफत्वे ढलोपदीर्घे च भवेदजर्घाः ॥" इति

न चैवं जन्मवानित्यत्रापि प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, उत्तरस्तु प्रत्ययो (१)नेति निवेशात् ॥ ३४ ॥

## ङ्याब्ग्रहणं किम् ।

अयम्भावः—रमा गौरीत्यादौ "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति परिभाषया प्रातिपदिकत्वधर्मस्यानयनेन प्रातिपदिकादित्यनेनैवेष्टसिद्धौ ङ्याब्ग्रहणं व्यर्थं सत् ङ्याबन्तादेव तद्धितोत्पत्तिर्यथा स्यादित्यर्थं बोधयति । अन्यथा स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमश उपस्थितौ, आर्यशब्दात् पूर्वं कप्रत्यये ततष्टापि, आकारस्थानिकाकारस्याभावेन "प्रत्ययस्थात्" इति नित्यमित्वे आर्यिका, इत्येकमेव रूपं स्यात् । ङ्याब्ग्रहणे कृते तु तत्सामर्थ्यात्पूर्वं टापि ततः कप्रत्यये "केऽणः" इति ह्रस्वे आकारस्थानिकस्याकारस्य सत्त्वेन, "उदीचामातः स्थाने यकपूर्वायाः" इति वैकल्पिक इत्वे, आर्यकेत्यपि सिध्यतीति फलम्बोध्यम् ॥ ३५ ॥

## रुत्वविसर्गौ रामः ।

ननु "स्थानिवत्" इति "उपदेशेऽजनुनासिक इत्" इत्यनयोः सूत्रयोः दृष्ट्या "ससजुषो रुः" इति शास्त्रस्यासिद्धत्वेन रेफपदान्तत्वाभावात्कथं विसर्ग इति चेन्न । "न मुने" इति सूत्रे ने इति पदं पृथक् कृत्य क्वचित् त्रिपाद्या असिद्धत्वन्न भवतीति समाधानादिति ॥ ३६ ॥

## सम्बुद्ध्याक्षिप्तस्य ।

अयम्भावः—"येन विना यदनुपपन्नन्तत्तेनाक्षिप्यत" इति न्यायात् सम्बुद्ध्याक्षिप्तस्याङ्गस्य सम्बुद्धिपदार्थेऽन्वये सति, अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते स च हल् एङ्ह्रस्वाभ्यां परीभूतश्चेत्, इत्यर्थाङ्गीकारे हे कतरदित्यत्र तकारस्य लोपापत्तिस्तद्वारणाय, अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते सा च सम्बुद्धिरेङ्ह्रस्वाभ्यां परीभूता चेदित्यर्थाङ्गीकारे हे कुल इत्यत्र एकदेशविकृतन्यायेन लान्तभागस्याङ्गत्वे, परादिवद्भावेन सम्बुद्धित्वे जाते सति ह्रस्वात्परा सम्बुद्धिर्नास्ति, इति मलोपो न स्यादिति क्वचिदन्येनाक्षिप्तस्यापि पदार्थस्या(२)न्यत्र पदार्थेऽन्वयो भवतीति भावः ॥ ३७ ॥

---

(१) **प्रत्ययो नेति ।** नचैवमर्थस्वीकारे अयम्, इयान्, इत्यादौ दोष इति वाच्यम्? उत्तरस्तु तत्प्रकृतिकप्रत्ययो नेति निवेशेनादोषात् । (२) **अन्यत्र पदार्थं इति ।** सम्बुद्ध्याक्षिप्तस्याङ्गस्य एङ्ह्रस्वाभ्यां विशेषणात्-एङन्तात् ह्रस्वान्ताच्चङ्गाद्धाल्लुप्यते सम्बुद्धेश्चेत् अयमर्थः सम्पन्नः । तथाच–प्रकृते 'कतरत्'इत्यत्र यदङ्गं तन्न ह्रस्वान्तं यद्ध्रस्वान्तं तन्नाङ्गम् । कुलमित्यत्र पूर्वान्तवद्भावेन अङ्गत्वमानीय ह्रस्वान्ताङ्गात्परस्य सम्बुद्ध्यवयवस्य मस्य लोपः इति भावः ।

## एङ्ग्रहणम् ।

अयम्भावः—हे विष्णो इत्यादौ परत्वान्नित्यत्वाच्च (१) "ह्रस्वस्य गुणः" इति गुणे कृते ह्रस्वात्परत्वन्न वर्तते इति ह्रस्वग्रहणेन न सिध्यतीति एङ्ग्रहणं कर्त्तव्यम् ।

अथ चैङस्सर्वत्रैव सम्बुद्धिसन्निपातेनैव जायमानत्वादेङ्ग्रहणसामर्थ्यादेव सन्निपातपरिभाषाऽत्र न प्रवर्तते । यदि सन्निपातपरिभाषा प्रवर्तेत तदा एङ्ग्रहणमेव व्यर्थं स्यात् ।

अथ च "गुणात्सम्बुद्धेः" इत्येव वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च सन्निपातपरिभाषा नात्र प्रवर्तते । अत एव हे लघिम इत्यादौ लोपः सिध्यति । अन्यथा तत्रापि सन्निपातपरिभाषया सम्बुद्धिसन्निपातेन जायमानो ह्रस्वः सम्बुद्धिविघातको न स्यादिति ॥ ३८ ॥

## पदव्यवायेऽपि ।

अयम्भावः—अङ्ग्रहणेनैवाऽऽङोऽपि ग्रहणे सिद्धे आङ्ग्रहणं व्यर्थं सत् "पदव्यवायेऽपि" इति निषेधं बाधितुम् । तेन 'पर्याणद्धम्' इत्यत्राङ्रूपपदव्यवधाने सत्यपि "उपसर्गादसमासेऽपि णोपदेशस्य" इति सूत्रेण णत्वं सिद्धं भवति । अन्यथा तेन निषेधेन णत्वं न स्यात् । नुम् ग्रहणेन चानुस्वारो लक्ष्यते, तच्च न कर्तव्यम् । यतः—'अयोगवाहानामट्सूपसंख्यातत्वेनानुस्वारस्यापि अच्त्वात् ॥ ३९ ॥

## प्रत्यये किम् ।

प्रत्ययग्रहणाभावे देवदत्त ओदनमपाक्षीरित्यत्र देवदत्तोत्तरसुप्रत्ययमवलम्ब्य देवदत्त ओदनमपाक्षीदिति समुदायस्याङ्गसंज्ञायां देवत्तात्पूर्वमपि अडागमापत्तिरिति प्रत्यये इति पदं कर्त्तव्यम् । कृते च प्रत्ययग्रहणे सु प्रत्यये परतः देवदत्तस्यैवाङ्गसंज्ञा स्यादिति भावः ॥ ४० ॥

## बहुवचने किम् ।

अयम्भावः—बहुवचनग्रहणाभावेऽपि "स्वौजस्" इति स्थाने "वौं जस्" इति न्यासेन रामर्, इति दशायां रेफस्य झल्प्रत्याहारे पाठाभावेनैत्वप्रवृत्तिरित्याह—रामस्येति । "टाङसिङसामिनात्स्याः" इति न्यासेन तु रामस्येत्यत्रापि दोषाभावे रामाभ्यामित्यत्र दूषणं बोध्यम् ॥ ४१ ॥

## झलि किम् ।

अयम्भावः—"उतो वृद्धिर्लुकि हलि" इति सूत्राद्धलीति पदमनुवर्त्य रामाणामित्यत्र हल्परत्वेऽपि "सन्निपातपरिभाषया" एत्वन्न स्यादिति झल् ग्रहणं व्यर्थमेव,

---

(१) नित्यत्वाच्चेति । चकारेण अनवकाशत्वरूपापवादस्यापि सङ्ग्रहो बोध्यः ।

तदेव व्यर्थं सत् एत्वे कर्त्तव्ये सन्निपातपरिभाषा न प्रवर्तते, इति ज्ञापयति । एवञ्च झल्ग्रहणाभावे रामाणामित्यत्र एत्वं स्यादेवेति त्वांशे झल् ग्रहं चरितार्थम् । फलञ्च सर्वेषामित्यत्र एत्वसिद्धिः । अन्यथाऽदन्तसन्निपातेन जायमानः सुट् अदन्तस्य विघातको न स्यादिति भावः ॥ ४२ ॥

## जश्त्वं वावसाने ।

जश्त्वं बाधित्वा "वावसाने" इत्यनेन चर्त्वं तदभावे जश्त्वे च रूपद्वयसिद्धिः । अवसाने चर्त्वं जश्त्वस्य बाधकं भवति । यतस्तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टस्य कृते चारितार्थ्यस्य सत्त्वात् । विस्तरस्तु शेखरटिप्पणे द्रष्टव्यः ॥ ४३ ॥

## सर्वे ।

ननु यथा "अवर्णस्त्रसावनञः" इति सूत्रेण "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषया नकारस्यैवादेशो भवति । तथैवात्रापि शकारस्येत्संज्ञायामुक्तपरिभाषया अनेकाल्त्वाभावेन शित्वासर्वादेश इति वक्तुमुचितमिति चेन्न, सति सर्वादेशे स्थानिवद्भावेन प्रत्ययत्वमादाय इत्संज्ञाया प्रवृत्तेः । यावत् सम्पूर्णस्य स्थाने आदेशो न भवति तावत् प्रत्ययत्वाभावेनेत्संज्ञैव न स्यादिति भावः ॥ ४४ ॥

## उभयशब्दस्य ।

अयम्भावः—सर्वतद्धितान्तस्याव्ययसंज्ञानिरासाय "तद्धितश्चाऽसर्वविभक्तिः" इति सूत्रे कृतस्य परिगणनस्य फलम् पचतिरूपं पचतिकल्पमित्यत्राव्ययसंज्ञाया अभाव इति हरदत्तमते, उभयशब्दस्य द्विवचनाभावो न सिध्यति, कैयटस्तु परिगणनफलमपहाय उभयोमणिः उभये देवमनुष्या इति भाष्योदाहरणेन 'उभयोऽन्यत्र' इति वार्तिकेन च उभयशब्दस्य द्विवचनाभावः सिध्यतीति वदति ॥ ४५ ॥

## एतच्च भाष्यविरुद्धम् ।

अयमाशयः—सन्निपातपरिभाषाया अनित्यत्वे "टाङसिङसामिनात्स्याः" इति सूत्रे इकारोच्चारणम् आकारोच्चारणम् 'अतो भिस ऐस्" इति सूत्रे ऐकारोच्चारणम्, इति त्रितयम्प्रमाणमस्ति तत्सर्वं भाष्यकृता प्रत्याख्यातमिति वृत्तिकारोक्तमप्रमाणमिति ॥ ४६ ॥

## निर्जरसौ

अयम्भावः—'प (१)दाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया "जरायाः

---

(१) पदेति । पदाधिकारे अङ्गाधिकारे च यस्य यत् विहितं तत् तस्य तदन्तस्य च भवतीत्यर्थः । जरसादेशश्चायमङ्गाधिकारस्थत्वाज्जराशब्दस्य तदन्तस्य च भवतीति भावः ।

जरस्'' इति सूत्रेण निर्जरसमुदायस्य जरसादेशे प्राप्ते 'निर्दिश्यमानस्यादेशा भवन्ति'' अनेकाल्शित्सर्वस्य'' इति परिभाषाभ्यां जराशब्दस्यादेशो भवति।

नन्वेवमपि निर्जरघटकजराशब्दो न वर्तते, किन्तु जरशब्दो वर्तते तत्कथं जरसादेश इति न शङ्कनीयम्। यतः-'ए(१)कदेशविकृतमनन्यवत्' इति परिभाषया निर्वाहात्।

## यूष्णः ।

अयमाशयः—''अचः परस्मिन्'' इति सूत्रे, अचः पूर्वत्वेन दृष्टात्परस्य विधावपि स्थानिवद्भावो भवतीति पञ्चमीसमासे अकारस्य स्थानिवद्भावेन ''रषाभ्याम्'' इति सूत्राप्रवृत्त्या ''अट्कुप्वाङ्'' इति सूत्रेण णत्वम्भवति 'पूर्वत्रासिद्धीये न स्थानिवत्' इति निषेधस्तु णत्वे कर्त्तव्ये न भवतीति भावः॥ ४८॥

## प्रभृतिग्रहणं प्रकारार्थम् ।

अयमाशयः—''पद्दन्'' इति सूत्रे प्रभृतिपदस्य प्रकारोऽर्थः। प्रकारो भेदसादृश्यम्। सादृश्यञ्चात्र (२)सुप्त्वधर्मेण गृह्यते। तथाच—यत्र सुप्त्वं स्यात्तत्रादेशा भवन्ति।

एवञ्च दोष् शब्दस्य नपुंसकलिङ्गे औङः श्यादेशे दोषन्नादेशो भवति। ततश्च 'ककुद्दोषणी' इति भाष्योदाहरणं सङ्गतम्भवति। एवमेव 'पदंघ्रिश्चरण'' इत्यादौ सुविभक्तौ पादशब्दस्य पदादेशः॥ ४९॥

## (३)'यू' किं मात्रे ।

अयम्भाव—यूग्रहणाभावेऽदन्तशब्दे, इनादेशादिना बाधात् घिसंज्ञाफलस्य नाभावादेः प्रवृत्तिर्न भविष्यति। ऋदन्तशब्दे च ''ऋतो ङिसर्वनामस्थानयोः'' इति सूत्रे ङिग्रहणेन ङित्सु ऋदन्तस्य गुणश्चेत्तर्हि, ङावेवेति नियमेन गुणादिर्न भविष्यतीति यूग्रहणफलं परिच्छेतृवाचकमातृशब्दे नाभावाभाव इति॥ ५०॥

## प्रथमहल् किम् ।

ननु 'संयोगान्तस्य लोप'' इति सूत्रेण सकारस्य लोपे राजेत्यादि पदानां सिद्धौ किं हल्ग्रहणेनेति चेन्न, ''न लोपः प्रातिपदिकान्तस्य'' इति सूत्रेण नलोपे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वेन प्रातिपदिकान्तनकारस्याभावान्नलोपानापत्तेरिति॥५१॥

---

(१) **एकदेशेति**। 'छिन्नेऽपि पुच्छे श्वा श्वैव भवति, न अश्वः न च गर्दभः इति न्यायादिति भावः। (२) **सुप्त्वधर्मेणेति**। सुप्त्वं प्रत्ययस्योपलक्षणं बोध्यम्। तेन 'आसन्यम्' इत्यस्य तद्धितयत्प्रत्यये परे आस्य शब्दस्यासन्नादेशे सति रूपसिद्धम्। सुप्त्वेन सादृश्ये तु न स्यादिति भावः॥ (३) ''नतु ङिति ह्रस्वश्च'' इत्यतोऽनुवृत्तेन ह्रस्वग्रहणेनैव समीहितरूपोपपत्तौ प्रकृतसूत्रेयूग्रहणमनावश्यकमेवेत्यत आह—**यू किमिति**।

## (१) द्विपर्यन्तानां किम् ?

अयम्भावः—"त्यदादीनामः" इति सूत्रे त्यच्छब्दादारभ्य सर्वेषाम् शब्दानां ग्रहणे भवच्छब्देऽपि "त्यदादीनामः" इति सूत्रेण तकारस्याकारे नलोपादिकार्ये च कृते भवा, इति रूपमनिष्टं स्यान्नतु भवानिति, भवच्छब्दस्य त्यच्छब्दात्प्रा पाठे कृते भवानिति रूपसिद्धेऽपि "त्यदादीनां मिथः सहोक्तौ" इति वार्तिके भवदादीनां मिथः इति पाठेनोक्तवार्तिकेन स च भवांश्चेति विग्रहे तच्छब्दस्यैव, एकशेषे भवन्ता-विति रूपासिद्धिरिति द्विशब्दपर्यन्तमेव त्यदादिग्राह्यमिति भावः ।

## सुसखिना ।

अयम्भावः—"शेषो घ्यसखि" इति सूत्रे असखीतिपदस्य वर्णसंज्ञापक्षे सखिभि-न्नावयवौ याविदुतौ तयोर्घिसंज्ञेत्यर्थः । तथाचात्र सुसखिशब्दस्य सखिभिन्नत्वेन तद-वयवस्येकारस्य घिसंज्ञायां नादेशे च सुसखिनेति सिद्धम् ॥ सखिभिन्नं यदिकारान्त-मुकारान्तं च तस्य घिसंज्ञेति तदन्तपक्षेऽपि सुसखिशब्दे घिसंज्ञा प्राप्तिः ।

नवीनास्त्वित्थं वदन्ति—पिण्डग्रः इत्यत्र दीर्घवारणार्थं यथा "अत्वसन्तस्य चा-धातोः" इतिसूत्रे धातुपदस्य तदवयवे लक्षणया धात्ववयवभिन्नासन्तस्येत्याद्यर्थो भवति । तथाऽत्रापि सखिशब्दस्य सख्यवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरिति, सख्यवयवभिन्नो य इवर्ण उवर्णश्च तदन्तं घिसंज्ञं स्यादिति चार्थो भवति । तथाचात्रे-कारस्य सख्यवयवत्वेन पक्षद्वयेऽपि घिसंज्ञा दुर्लभा ॥ ९३ ॥

## दुर्धियः ।

ननु दुरित्यस्य ध्या धातुयोगे "गतिश्च" इति सूत्रेण गतित्वाद् "गतिकारकेतर" इति वार्तिकाप्रवृत्त्या यण् कथन्न स्यादिति चेन्न । "यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः" इति वचनात् । दुःशब्दार्थस्य दुष्टत्वस्य स्थाधात्वर्थेऽन्वयेन ध्याधात्वर्थेऽन्वयाभावेन गतित्वाभावात्, वृश्चिकभिय इत्यत्रापि वृश्चिकस्य भीः, वृश्चिकभीरिति सम्बन्धसामान्यषष्ठ्या समासेन कारकत्वाभावात्, "गतिकारक" इति वार्तिकप्रवृत्त्या यणोऽभाव इति भावः ॥ ९४ ॥

## हे भानो ।

अयम्भावः—यदि सम्बुद्धिविषये ओकारस्यौत्वं स्यात्तर्हि सम्बुद्धिविषये सर्वत्र ओकाराभावेन "सम्बुद्धौ शाकल्यस्येतावनार्षे" इति सूत्रमेव व्यर्थं स्यात् । तदेव व्यर्थं सत् सम्बुद्धौ ओकारस्यौत्वन्न भवतीति ज्ञापयति, एवञ्च जस् विभक्तौ गुणे कृते, औत्वं स्यादित्यभिप्रेत्याह—हे भानव इति ॥ ९५ ॥ इत्यजन्तपुँल्लिङ्गाः ।

---

(१) ननु युष्मदस्मदोर्विषये विशेषविहितैः आत्वयत्वलोपैर्बाधेन कादेशविधानेन च तत्र दोषाभावात् द्विपर्यन्तग्रहणं व्यर्थमित्यत आह—द्विपर्यन्तानामिति ।

# अथाजन्तस्त्रीलिङ्गाः ।

## असंयुक्ता ये डलकास्तद्वताम् ।

अयम्भावः—भाष्यकृता "अम्बार्थं द्व्यचरं यदि" इति वचनेन द्व्यचकस्यैवा-र्थस्य ह्रस्वो भविष्यतीति हे अम्बाडे इत्यादिप्रयोगेषु ह्रस्वो न स्यादिति "डलकवतां प्रतिषेधो वक्तव्य" इति वार्तिकं प्रत्याख्यातम् ।

तथा च—वार्तिकाभावे 'हे अक्क' इत्यादिप्रयोगे ह्रस्वो भवति । वार्तिकसत्ता-यान्तु ह्रस्वो न भवतीति फलभेदानिरासाय वार्तिकसत्वेऽपि "असंयुक्ता ये डलकास्त-द्वतां प्रतिषेधो वक्तव्यः" इत्यर्थोऽवश्यं कार्यः । इत्थञ्च मूले "असंयुक्ता ये डलकास्त-द्वतां प्रतिषेधो वक्तव्यः" इति फलितमाह ग्रन्थकारः ॥५६॥

## यद्यपि जरसादेशस्य ।

अयम्भावः—जरसावित्यादौ जरसादेशस्य स्थानिवद्भावेनाबन्तत्वमाश्रित्य "औ-ङ आपः" इत्यादिमूलोक्ताः पञ्चापि (१) कार्याणि प्राप्नुवन्ति । परञ्च "अनल्विधौ" इति निषेधेन स्थानिवद्भावाभावेनाबन्तत्वाभावान्न भवन्ति ।

नचाबन्तत्वधर्मस्याल्मात्रवृत्तित्वाभावेन "अनल्विधौ" इति निषेधो न स्या-दिति वाच्यम् । "औङ आपः" इत्यादिसूत्रेण आकारस्य प्रश्लेषेण आकाररूपो य आप् तदन्तात्परस्य औङः शी स्यादित्याद्यर्थात् । तथाच—आकाररूपत्वधर्मः स्था-निवद्भावेन नह्यायास्यतीति पञ्चापि कार्याणि न भवन्ति ।

इत्थञ्च "हल्ङ्याब्भ्यः" इति सूत्रे ङी ई आ आप् इति प्रश्लेषेण निष्कौशाम्बि-रतिखट्व इत्यादौ आकाररूपत्वधर्मस्यानयनं न स्यादिति सुलोपस्य प्रसङ्ग एव ना-स्तीति तदर्थं सूत्रे दीर्घग्रहणं न कर्त्तव्यमिति परमलाघवम् ।

नचाकाररूपो य आप् तदन्तमित्याद्यर्थेऽपि अतिखट्वायेत्यत्र श्रूयमाणाऽकारः स्थानिवद्भावेनाप्त्वञ्चाश्रित्य याट् स्यादिति वाच्यम् । आबन्ततदाद्यभिन्नं यदङ्गं ततः परस्य याट् स्यादित्यर्थात् ।

एवञ्चात्र यत् खट्वा इति आबन्ततदादि न च तदङ्गमस्ति, यच्चाङ्गं वर्तते अति-खट्वेति न च तत् आबन्ततदादीति याट्ऽप्रवृत्तिः ।

न च स्त्रीप्रत्यये "प्रत्ययग्रहणे यस्मात्स विहित" इत्यादिपरिभाषा निषिध्यते इति तदादिनियमाभावेन आबन्तं यदङ्गमित्याद्यर्थं एव स्यादिति । अतिखट्वेत्यत्रावन्त-मङ्गं वर्तते इति याट् स्यादिति वाच्यम् । "अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभा-वात्" अत्र तूपसर्जनस्त्रीप्रत्ययो वर्तते ॥ ५७ ॥

---

(१) पञ्चापीति "औङ आपः" "आङि चापः" "याडापः" "ह्रस्वनद्यापः" "ङेराम्" इति पञ्चेति भावः ॥

## अतिस्त्रियै ।

"ङिति ह्रस्वश्च" इति सूत्रस्य इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ "ईदूतौ" इति, ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदी संज्ञौ स्तः इति चार्थद्वयं भवति। प्रथमार्थे च "यूस्त्र्याख्यौ" इति सूत्रम्, 'इयङुवङ्स्थानावस्त्री" इति चानुवर्तते ततश्च यत्र दीर्घकारान्तः स्त्रीशब्दो भवति तत्रैव अस्त्रीति निषेधः प्रवर्तते। एवञ्चात्र ह्रस्वान्तत्वेन निषेधो न भवतीति भावः ॥ ५८ ॥

## पदान्तरं विनापि ।

अयम्भावः—वृत्तिकारमते ये शब्दाः स्त्रीति पदं विनापि स्त्रीलिङ्गं वक्तुं समर्थास्तेषां शब्दानां स्त्रीलिङ्गवद्रूपं स्यात्। यथा—प्रकृष्टं ध्यायतीति विग्रहे प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपं स्यात्। यतः श्रीभगवतो ध्याने स्त्रीपुरुषयोर्द्वयोरप्याज्ञया प्रधीः स्त्रीति विशेष्यविशेषणभावं विनापि प्रधीशब्दः स्त्रीलिङ्गं वक्तुं समर्थ इति नित्यस्त्रीत्वं तस्य कैयटमते तु ये शब्दा नपुंसकलिङ्गं पुंल्लिङ्गञ्च न वदेयुस्तेषामेव शब्दानां नित्यस्त्रीत्वं भवति, एवञ्च प्रधीः पुरुषः प्रधि कुलमित्याद्यर्थेन प्रधीशब्दस्य नित्यस्त्रीत्वाभावेन लक्ष्मीशब्दवद्रूपञ्च स्यादिति भावः ॥ ५९ ॥

इत्यजन्तस्त्रीलिङ्गाः ।

---

# अथाजन्तनपुंसकलिङ्गाः ।

## (१) न लुमताङ्गस्यानित्यत्त्वात् ।

अयम्भावः—"इकोऽचि विभक्तौ" इति सूत्रेणाजादिविभक्तौ हलादिविभक्तौ च सर्वत्रैव नुमि सति, अजादिषु नुम इष्टत्वात् हलादिषु च "स्वादिष्वसर्वनामस्थाने" इति सूत्रेण पदसंज्ञायाम् "नलोपः प्रातिपदिकान्तस्य" इति नलोपे वारिभ्यामित्यादिप्रयोगे नास्ति किमपि दूषणमिति अज्ग्रहणं व्यर्थं सत् "न लुमताङ्गस्य" इति सूत्रस्यानित्यत्वं ज्ञापयति। एवञ्च "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रेण सम्बुद्धौ सुविभक्तित्वाश्रयणेन नुमि, "न ङिसम्बुद्ध्योः" इति नलोपनिषेधे हे वारिन्नित्यनिष्टं रूपं स्यादिति स्वांशे चरितार्थम्। फलञ्चात्रैव हे वारे इत्यत्र "ह्रस्वस्य गुणः" इति गुणरूपम् ॥ ६० ॥ इत्यजन्तनपुंसकलिङ्गाः ।

---

(१) ननु वारिशब्दात्सम्बुद्ध्येकवचने सौ परे तस्य "एङ्ह्रस्वात्सम्बुद्धेः" इत्यनेन लोपे तस्य प्रत्ययलक्षणेन "ह्रस्वस्य गुणः" प्राप्तः तस्य "न लुमताङ्गस्य" इति निषेधे हे वारि इत्येव भवेत्, न तु हे वारे इति। तथा च हे त्रपो हे त्रपु इति भाष्योदाहरणस्थासङ्गत्यापत्तिरति आह— **न लुमतेति।**

# अथ हलन्तपुँल्लिङ्गाः ।

## उपदेशे किम् ।

अयम्भावः—"दादेर्धातोर्घः" इति सूत्रस्य दादिधातोर्हस्य घः स्यादित्यर्थे, अधोगित्यत्र 'दुह लु' इति दशायां लावस्थायामडिति भाष्यसिद्धान्तेनाटि कृते दादित्वाभावेन घत्वन्न स्यात्। दामलिह्यतीति दामलिडित्यत्र च दादिधातुत्वेन घत्वं स्यादिति अव्याप्त्यतिव्याप्तिदोषपरिहाराय दादिसूत्रे दादिपदस्यावृत्तिः कार्या ॥ ६१ ॥

## एकाचः ।

अयम्भावः—"एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति सूत्रे "सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वम्" इति न्यायेन "एकाचः" इति धातोरेव विशेषणं भवितुमर्हति। तथाच—गर्धप् गर्धब् इत्यादौ धातोरेकाच्त्वाभावेन भष्भावो न स्यादिति लक्ष्यानुरोधेन क्वचिद् वैयधिकरण्येनान्वयो भवति। ततश्च धातोरवयवो य एकाच् झषन्तस्तदवयवस्येत्यादिसूत्रार्थेनोक्तप्रयोगे भष्भावसिद्धिः। धुगित्यादौ धातुरेवैकाच् न तु तदवयव इति व्यपदेशिवद्भावेनैकाच्त्वमाश्रित्य भष्भावसिद्धिः ॥ ६२ ॥

## अनड्वान् ।

अयम्भावः—"सावनडुहः" इति सूत्रे "आच्छीनद्योर्नुम्" इत्यत आदिति पदमनुवर्त्तते। ततश्चावर्णात्परानडुह्शब्दस्य नुम् स्यात्सौ परे इति सूत्रार्थो भवति। एवञ्च "चतुरनडुहोरामुदात्तः" इति सूत्रविहितस्यामः सर्वनामस्थानविषयो भवति "सावनडुहः" इतिविहितस्य नुमस्तु सुरेव विषय इति विशेषविहितेनापि नुमा आमो बाधो न भवति। यत आदित्यधिकारात्। यदि नुमा आम्बाधा स्यात्तदा "आत्" अधिकार एव व्यर्थः स्यादिति उपजीव्यविरोधः स्यात्। एवं रीत्या अमा च नुम् न बाध्यते। नुम्विधिसामर्थ्याद्दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। ततश्चोक्तप्रयोगसिद्धिः ॥ ६३ ॥

## णत्वं द्वित्वं चतुर्णाम् ।

ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वे कर्त्तव्ये "पूर्वत्रासिद्धम्" इति सूत्राप्रवृत्त्या परत्वात् द्वित्वे ततो णत्वमित्येव लेख्यमिति चेन्न। "पूर्वत्रासिद्धीयम द्वित्वे" इति परिभाषया द्वित्वे कर्त्तव्ये, अन्यदसिद्धं न भवति। द्वित्वं यदि परं स्यात्तदासिद्धं स्यादेवेत्यर्थेन द्वित्वस्यासिद्धत्वात् णत्वं द्वित्वमिति मूलस्य युक्तत्वात् ॥ ६४ ॥

## अकच्सहितस्यापि ।

ननु 'इमः' इति न्यासेऽपि किम्शब्दस्य टेः प्राक् पाठकरणेन "त्यदादीनामः"

इति सम्पूर्णसूत्रानुवृत्त्या 'त्यदादीनामिमः अः' स्यादित्यर्थेन कः इत्यादि प्रयोगसिद्धौ ककारोपादानं व्यर्थमिति चेन्न । ककारोपादानस्याकच्सहितस्य विधानार्थत्वात् । न-चोक्तन्यासे "अलोऽन्त्यस्य" इति सूत्रेण मकारस्यैवादेशः स्यादिति वाच्यम् ? 'नान-र्थकेऽलो(१)न्त्यविधिः' इति निषेधात् ॥ ६५ ॥

## राज्ञः ।

ननु स्थानिवद्भावेन लुप्ताकारस्यानयनेन जकारनकारयोर्मध्ये व्यवधानात् श्चुत्वन्न स्यादिति चेन्न । "पूर्वत्रासिद्धीये न स्थानिवत्" इति स्थानिवद्भावनिषेधात् । "वाह ऊठ्" इति सूत्रज्ञापिताया "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषाया दृष्टया श्चु-त्वविधायकशास्त्रस्यासिद्धत्वेनान्तरङ्गशास्त्रस्यैवाभावेन "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषयापि अल्लोपो नासिद्ध इति भावः ॥ ६६ ॥

## वृत्रघ्नः ।

अयमाशयः—'वृत्रघ्न' इत्यादि प्रयोगेषु णत्ववारणाय "कुव्यवाये हादेशेषु प्रति-षेधो वक्तव्यः" इति वार्तिककारेण वार्तिकं पठितम् । भाष्यकारस्तु वृत्रघ्नः, सुघ्नः, प्राघानि एषु प्रयोगेषु णत्ववारणाय 'अत्पूर्वस्य' इति योगविभागस्य, अकारपूर्वस्यैव हन्तेर्णत्वम्भवतीत्यर्थं कृत्वा वार्तिकं प्रत्याचख्यौ । एवञ्च महर्षिद्वयविरोधान्माधव-कथितं वैकल्पिकणत्वमन्याय्यमिति ॥ ६७ ॥

## मघवा ।

"श्वन्नुक्षन्" इति सूत्रेण मह धातोः कनि प्रत्यये हकारस्य घकारे अवुगागमे च कृते मघवा इति रूपं सिध्यति । मघशब्दान्मतुपि "अत्वसन्तस्य चाधातोः" इति दीर्घे नुमादिकार्ये च कृते मघवानिति रूपं सिद्धम्भवति । एवञ्च रूपद्वयसिद्धौ "मघवा बहुलम्" इति सूत्रं प्रत्याख्यातमाकरे । तथा चारम्भप्रत्याख्यानयोः फलैक्याय बहु-लग्रहणेन दीर्घे कर्त्तव्ये संयोगान्तलोपो नासिद्ध इत्येव कल्पना कार्या । बहुलग्रहण-सामर्थ्येन नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वन्न भवतीति कल्पना यदि स्यात्, तदा प्रत्याख्यानपक्षे मघवानिति रूपम्भवति, सूत्रारम्भे तु मघव इति रूपम्भवतीति फलभेदः समापततीति मूलोक्तमेव युक्तमिति भावः ॥ ६८ ॥

## अष्टौ ।

अयम्भावः—एकमात्रालाघवेन 'अष्टभ्यः' इत्येव वक्तव्ये 'अष्टाभ्य' इति दीर्घोच्चा-रणं क्वचिदजादावपि "अष्टन आ विभक्तौ" इति सूत्रविहितमात्वम्भवतीति ज्ञापय-

---

(१) नानर्थकेति । "नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे" इयं परिभाषा अनर्थके 'इमः' इत्यत्र न प्रवर्तते इति भावः ।

ति। तेन जस्शसोरपि विषये आत्वं सिध्यति, "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणेन "अष्टन आ" इति विहितमात्वं विकल्पेन भवतीत्यपि सिद्धम्। अन्यथा सर्वत्रैव दीर्घाकारस्यैव सम्भवात्तत्सूत्रे दीर्घग्रहणं व्यर्थमेव स्यादिति ॥ ६९ ॥

## द्विपर्यन्तानामित्येव ।

अयम्भावः—"तदोः सः सावनन्त्ययोः" इति सूत्रे त्यदादीनां(१) द्विपर्यन्त एव गृह्यते इति युष्मद्शब्दस्य त्यदादिबहिर्भूतत्वेन त्वमित्यत्र तकारस्य सत्वं न भवति।

न च "त्वाहौ सौ" इति सूत्रे तकारोच्चारणसामर्थ्यादेवात्र सत्वं न स्यादिति वाच्यम्। अतित्वमित्यत्र गौणे तकारोच्चारणस्य सफलत्वात्। तत्र चात्वसत्वे न भवतः, यतः सर्वेषां नामवाचकः सर्वनामेत्यन्वर्थसंज्ञाबलेन यत्र सर्वादीनां प्राधान्यं स्यात्तत्रैव सर्वनामसंज्ञा भवति। गौणे च सर्वादीनां प्रधानता न विद्यते इति सर्वनामसंज्ञा न भवति। एवञ्च सर्वनामसंज्ञानिमित्तकं सर्वाद्यन्तर्गणकार्यञ्च प्रधानतायामेव न तु गौणे ॥ ७० ॥

## त्वं स्त्री ।

ननु त्वं स्त्रीत्यत्र "त्वाहौ सौ" इति त्वादेशे "शेषे लोप" इति लोपे "ङे प्रथमयोरम्" इत्यमादेशे च त्व अम्, अह अम् इति दशायाम् 'असिद्धं बहिरङ्गमनतरङ्गे' इति परिभाषया परमपि अमि पूर्वरूपं बाधित्वा टाप् स्यादिति चेन्न। 'अलिङ्गे युष्मदस्मदी' इति वचनेन तयोः स्त्रीत्वाभावात्। "शेषे लोपः" इति सूत्रे शेषे इति षष्ठ्यर्थे सप्तमी ततश्च शेषस्य 'अद्' इत्यस्य लोप इत्यर्थे त्व अद् इति स्थिते "अतो गुणे" इति पररूपे कृते परादिवद्भावेन अद्भागमादाय तस्यादभागस्य लोपेऽदन्तत्वाभावादेव न टाप् स्यादित्यपि बोध्यम् ॥ ७१ ॥

## मपर्यन्तस्य किम् ।

अयम्भावः—"ओकारसकारभकरादौ सुपि सर्वनाम्नः टेः प्रागकच् अन्यत्र तु सुबन्तस्य टेः प्रागकच्" इति वार्तिकेन पूर्वं युवामिति संसाध्य आमः पूर्वम् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इति सूत्रेणाकजादेशे युवकामित्यत्र दोषाभावेन त्वया म्येति दूषणं दत्तम् "योऽचि" इति सूत्रस्थाने "अच्ये" इति न्यासेन अजादिविभक्तौ एत्वं स्यादित्यर्थेऽलोऽन्त्यपरिभाषया त्वादेशोत्तरम् अकारस्य एत्वे अयादेशे च कृते त्वयेति रूपसिद्धौ युवकाभ्यामित्यत्र दूषणं बोध्यम् ॥ ७२ ॥

---

(१) द्विपर्यन्त एवेति। "त्यदादीनामः" इत्यत्र पठितं "द्विपर्यन्तानामेवेष्यते" इति वार्तिकं "तदोस्सःसावनन्त्ययोः" इत्यत्राप्यनुवर्तत इति भावः।

## यूयम् ।

अत्र "शेषे लोपः" इति सूत्रे शेषे इति सप्तमी तत्र पक्षे अन्त्यस्य लोपो भवतीत्यर्थे यूयशब्दस्यादन्तत्वात् शीभावः प्राप्तः "अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्" इति न भवति । टिलोपपक्षे तु "ङे प्रथमयोरम्" इति सूत्रे मकारान्तरं प्रश्लिष्य मान्त एवादेशो भवतीति व्याख्यानान्न भवतीति भावः ॥ ७३ ॥

## भ्यसो भ्यम् ।

अय(१)म्भावः—"भ्यसो भ्यम्" इति सूत्रे भ्यम् , अभ्यमिति द्विधा पदच्छेदस्तत्र भ्यम् इति पदच्छेदे "शेषे लोपः" इति सूत्रस्यान्त्यलोपपक्षे एव युष्मभ्यं सिध्यति । अभ्यमिति पदच्छेदे तु "शेषे लोपः" इत्यस्य अङ्गागलोपपक्षे एव युष्मभ्यमिति सिध्यति । अयमेव पदच्छेदद्वये भेदः ॥ ७४ ॥

## (२) भाविनः सुटः ।

अयम्भावः—आकमादेशात्पूर्वं "योऽचि" इति सूत्रप्रवृत्त्या यत्वनिमित्तविभक्तित्वेन "शेषे लोपः" इति सूत्रस्य प्रवृत्त्यभावेनादन्तत्वाभावात् सुटोऽप्रवृत्तौ 'साम' इति सकारनिर्देशोऽनुपपन्नः सन् आकमि कृतेऽदन्तत्वेन प्राप्तस्य सुटो निवृत्तिं करोति । अस्येव साम्त्वस्य मिथ्याऽरोपेण सामः स्थाने आकमि कृते स्थानिवद्भावेन साम्त्वमेवानीयते, न तु आम्त्वमिति स्थानिवद्भावेन आम आनयनासम्भवात् सुट् स्वयमेव निवर्तते ॥ ७५ ॥

## (३) समस्यमाने ।

अयम्भावः—"युवावौ द्विवचने" "त्वमावेकवचने" इति सूत्रे द्विवचनैकवचनयोरर्थपरत्वव्याख्याने फलं दर्शयति—समस्यमाने द्वेकत्वेत्यादिना ।

तथा च—यत्र समासे लौकिकविग्रहवाक्ये युष्मदस्मद्शब्दौ द्वित्वस्य वाचकौ स्तः, तत्र सु जस् ङे ङस् इति चतस्रः विभक्तीः विहाय सर्वत्रैव युवावौ स्याताम् ।

---

(१) ननु अत्र अभ्यम् इति पदच्छेदः, उत भ्यम् इति पदच्छेदः इति चेत् ? विनिगमनाविरहात् उभयोरपि ग्रहणे न दोषः इति प्रकृतसूत्रे भाष्येऽप्युक्तम् । उभयपक्षे सङ्गतिमाह—**अयम्भाव इति** । (२) **भाविनः सुडिति** । न च "आमो ऽाकमि"ति न्यासेन सिद्धौ व्यर्थोऽयम्प्रयास इति वाच्यम् । पाणिन्युच्चारितन्यासस्यैव पुण्यजनकत्वेन तथा न्यासस्यायुक्तत्वादिति भावः । (३) **समस्यमाने इति** । तत्र प्रथमश्लोके चेदित्यनन्तरमपीत्यध्याहार्यम् । यदि समस्यमाने युष्मदस्मदी एकत्ववाचिनी तदा समासार्थः अन्यसंख्यश्चेदपि 'युवावौ' 'त्वमौ' अपि स्तः इत्यन्वयो मूले अभ्युपेयः ।

यत्र च लौकिकविग्रहवाक्ये युष्मदस्मद्शब्दौ एकत्वरूपार्थस्य वाचकौ स्तः। तत्र पूर्ववत्सर्वत्र त्वमौ स्याताम्। अथ च यत्र समासे युष्मदस्मद्शब्दौ बहुत्वरूपार्थस्य वाचकौ तत्र युवावौ त्वमौ च न स्तः।

इत्थञ्च त्वां मां वाऽतिक्रान्त इति विग्रहे सर्वत्र त्वमौ भविष्यतः। युवामावां वाऽतिक्रान्त इति विग्रहे सर्वत्र युवावौ भविष्यतः। युष्मान् अस्मान् वाऽतिक्रान्त इति विग्रहे च युवावौ त्वमौ च न भविष्यतः। द्विवचनैकवचनयोः 'प्रत्ययपरत्वे तु समस्तपदादेकवचने त्वमौ स्याताम्। द्विवचने च युवावौ स्यातामिति रूपेषु महान् भेदो भविष्यति। तस्मादर्थपरत्वमेव न्याय्यम्॥ ७६॥

## अमुमुयङ्।

अयम्भावः—यथा "कृपो रो लः" इति सूत्रेण रेफस्य ऋकारावयवरेफसदृशस्य च लत्वं भवति। तथैव "अदसोऽसेः" इति सूत्रेण दकारद्वयस्य मकारः अकाररेफयोश्चो-कारो भवतीति पक्षे अमुमुयङ् इति रूपम्। "अलोऽन्त्यस्ये"ति सूत्रेणेकारस्योत्वं प्राप्नोति, दकारोच्चारणाच्च रेफस्योत्वं प्राप्नोतीति, दकारोपादानसामर्थ्येन रेफस्यैवोत्वं स्यादिति "अन्त्यबाधेऽन्त्यसदेशस्य" इति परिभाषया परस्यैव मकारे उकारे च कृते 'अदमुयङ्' इति रूपम्, असेरिति निर्देशेन यत्र सकारस्याकारो भवति, तत्रैव मुत्वं भवतीति पक्षेऽत्र मुत्वाप्राप्तिरिति अदद्र्यङ् इति रूपम्भवति॥ ७७॥

## (१) उगिद्चामिति।

अयम्भावः—अञ्चुधातोरपि उगित्त्वेन उगिदित्यंशेनैव नुमः सिद्धौ, अञ्चुग्रहणं व्यर्थं सत् धातोश्चेदुगित्कार्यं तर्हि अञ्चुधातोरेवेति नियमयति। तेन स्रत् ध्वत् इत्यादौ नुम् न भवति। इत्थं च अञ्चुधात्वतिरिक्तानां धातूनां नुमोऽभावसिद्धौ अधातुग्रहणं गोमानित्यस्य वर्त्तमानकालेऽधातुत्वाभावेऽपि पूर्वकालिकाधातुत्वमादाय नुम् स्यादित्यर्थस्यावबोधनार्थम्॥ ७८॥

## नुम्विसर्जनीय०।

अयम्भावः—नुमि सति सर्वत्रैव नकारस्यानुस्वारे नुम्पदस्य लक्षणया नुम्स्था-निकानुस्वारस्य व्यवधानेऽपि षत्वं भवतीत्यर्थो भवति। तेन सुहृत् सु इत्यत्र नुमः सत्त्वेऽपि षत्वन्न भवति। सु इत्यत्रापि मकारस्थानिकानुस्वारस्य सत्त्वात्षत्वं न। इत्थञ्चानुस्वारस्य शर्प्रत्याहारे पाठेऽपि शर्ग्रहणेनानुस्वारस्य व्यर्थता न भवति यतोऽत्र विलक्षणानुस्वारो गृह्यते॥ ७९॥

---

(१) ननु "उगिदचाम्" इति सूत्रे अधातोः इत्यस्य सत्त्वेन धातोर्नुमोऽप्राप्त्या क्यजन्ता-दिगोमच्छब्दस्य धातुत्वाभावेन नुम्न स्यादित्यत आह—उगिद्चामिति।

## पुंसोऽसुङ् ।

अयम्भावः—बहुपुंसीत्यत्र "विभक्तौ लिङ्गविशिष्टाग्रहणम्" इति परिभाषया ङीप्-विशिष्टस्य पुंस्शब्दत्वाभावेनासुङादेशाप्रवृत्तौ प्रत्ययस्योगित्वेनैव तत्र ङीप्सिद्धिरिति तेनैवोगित्वेन नुमपि स्यादिति नुमर्थमसुङादेशस्योकारस्येत्संज्ञा न कर्त्तव्या ॥ ८० ॥

## औत्वप्रतिषेधः ।

अयम्भावः—यत्र "औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वञ्च" इति वार्तिकं लगति तत्रौत्वप्रतिषेधः, उत्वं चेति कार्यद्वयं भवतीति असुकः सिध्यति। असकौ इत्यत्र "अदस औ सुलोपश्च" इति औकारादेशे वार्तिकविहितमुत्वमपि न भवति ॥ ८१ ॥ इति हलन्तपुंल्लिङ्गाः ।

---

# अथ हलन्तस्त्रीलिङ्गाः ।

## विमलदिवौ ।

ननु यथा राजपुरुष इत्यत्र पूर्वपदस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां नलोपो भवति, तथाऽत्रापि "प्रत्ययलक्षणम्" इति सूत्रेण दिव् इत्यस्य पदसंज्ञायां सत्यां "दिव उत्" इति उत्वं स्यादिति चेन्न । "उत्तरपदत्वे चापदादिविधौ प्रतिषेधः" इति वार्तिकेन प्रत्ययलक्षणनिषेधात्। वार्तिकार्थस्तु उत्तरस्य—उत्तरपदस्य, पदत्वे पदसंज्ञायां पदप्रयुक्ते कार्ये च कर्त्तव्ये प्रत्ययलक्षणं न भवतीति उत्तरपदस्याद्याक्षरस्य कार्ये कर्त्तव्ये प्रत्ययलक्षणं भवत्येवेति। तथा च दध्ना सेचौ दधिसेचौ इत्यत्र सकारस्य "सात्पदाद्योः" इति सूत्रेण षत्वनिषेधे कर्त्तव्ये प्रत्ययलक्षणेन सेच् इत्यस्य पदत्वमस्त्येव, चकारस्य ककारे कर्त्तव्ये तु पदत्वन्नास्तीति भावः ॥८२॥ इति हलन्तस्त्रीलिङ्गाः ।

# अथ हलन्तनपुंसकलिङ्गाः ।

## अहः ।

अयम्भावः—अहन् सु इति दशायां सुलोपे "नलोपः प्रातिपदिकान्तस्य" इति सूत्रदृष्टया "रोऽसुपि" इति सूत्रस्यासिद्धत्वेन नलोपे प्राप्ते (१)"अहन्" इति सूत्रस्यावृत्तिं कृत्वा एकेन सूत्रेण अहन्शब्दो यादृशो वर्तते तादृशो वर्ततान्नाम, न तु विकृतिं प्राप्नुयादित्यर्थो बोध्यते । द्वितीयसूत्रेण च 'अहन्' इत्यस्य रुः स्यात्पदान्ते। एवञ्च

---

(१)"अहन्" इति सूत्रस्यावृत्तिमिति। अत्र प्रमाणं "रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्" इति वार्तिकमेव। अन्यथा नलोपे अकारस्य रेफादेशेनैव सिद्धौ वार्तिकमिदं व्यर्थं स्यादिति भावः।

नलोपाभावे रुत्वे च कृते, अहः इति रूपं सिद्धम्। अहोभ्यामित्यत्र च नलोपसूत्रदृष्ट्या अहन् इत्यस्यासिद्धत्वे नलोपे प्राप्ते पूर्वोक्तरीत्या सर्वं कार्यं सिध्यति। आवृत्तौ मानञ्च "रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्" इति वार्तिकमेव। अन्यथा नलोपे अहोरूपमित्यादौ हकारघटकाकारस्य रेफादेशे रुत्वादेशे वा नास्ति वैलक्षण्यम्, अकारभावेन "हशि च" इति सूत्रस्याप्रवृत्तेः ॥ ८३ ॥

## दीर्घाहाः।

ननु दीर्घाहन् सु इति दशायां "हल्ङ्यादि"सूत्रेण सुलोपे प्रत्ययलक्षणेन 'असुपि' इति निषेधात् "रोऽसुपि" इति सूत्रस्याप्रवृत्तावपि "अहन्" इत्यनेन रुत्वं कथं न स्यादिति चेत्, न। "सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रदृष्ट्यातस्यासिद्धत्वात्। एवं चात्र दीर्घः सिध्यति ॥ ८४ ॥

## बेभिदि।

ननु (१)बेभिद् शि इति दशायां झलन्तत्वेन "नपुंसकस्य झलचः" इति नुम् कथन्न स्यादिति चेत्, न। अल्लोपस्य स्थानिवत्त्वात् स्थानिभूतादचः पूर्वस्य कार्ये कर्त्तव्ये स्थानिवद्भावो भवति। न तु अजन्तस्य कार्ये कर्त्तव्ये, इति अजन्तलक्षणोऽपि नुम् न भवतीति भावः ॥ ८५ ॥

## गवाक्षु।

अयम्भावः—गत्यर्थे नलोपे गवाच् इति दशायाम् "चोः कुः" इति ककारे, ककारस्य "झलां जशोऽन्ते" इति गकारे, गकारस्य "खरि च" इति ककारे, षत्वादिकार्ये च कृते उक्तरूपसिद्धिः।

अत्र च "चयो द्वितीयाः शरि" इति वार्तिकेन ककारस्य खकारे कृते गवाख्षु गोअख्षु गोख्षु इति त्रीणि रूपाणि वर्धिष्यन्ते इति न शङ्कनीयम्। चर्त्वस्याऽ(२)सिद्धत्वात्।

पूजायान्तु नलोपाभावे "ङ्णोः कुक्" इति कुकि कुकोऽसिद्धत्वेन जश्त्वाभावे "चयो द्वितीया" इति वार्तिकेन ककारस्य खकारे कृते गवाङ्ख्षु १, गोअङ्ख्षु २, गोङ्ख्षु ३, इति त्रीणि रूपाणि वर्धन्त (३)एवेति तत्त्वम् ॥ ८६ ॥

---

(१) **बेभिदिति।** बेभिद्यतेः क्विपि अल्लोपे यलोपे च बेभिद् इति रूपमिति भावः।

(२) **असिद्धत्वादिति।** "चयो द्वितीयाः" इति शास्त्रदृष्ट्या चर्त्वशास्त्रस्यासिद्धत्वात् ककारो नास्त्येवेति भावः।

(३) **वर्धन्त एवेति।** न चैवं सति 'न वाधिकशतं मतम्' इति विरोधः शङ्क्यः। 'नवाधिकशतं मतम्' इति सूत्रकारस्य मतमित्यर्थात्।

## स्वाम्पि ।

(१)अयम्भावः—(२)लक्षणप्रतिपदोक्तपरिभाषया नित्यात्परादपि नुमः पूर्वम् "अप्तृन्" इति दीर्घे पश्चान्नुमि स्वाम्पीति सिद्धम् । यदि च प्रतिपदोक्तं कुत्रचिच्चरितार्थं न स्यात्, तदा लक्षणप्रतिपदोक्तपरिभाषाविषयो भवतीति पक्षे आप इत्यत्र "अप्तृन्" इति सूत्रस्य सफलत्वेन परिभाषाविषयाभावात्पूर्वं नुमि, उपधाया अभावेन दीर्घाभावे स्वाम्पीति रूपम् ॥ ८७ ॥ इति हलन्तनपुंसकलिङ्गाः ।

# अथ स्त्रीप्रत्ययाः ।

## (३) पञ्चाजी ।

अयम्भावः—'प्रत्ययः' 'परश्च' इति निर्देशेन प्रत्ययविधौ पञ्चम्या युक्तत्वेन "अजाद्यतष्टाप्" इति सूत्रेऽजाद्यतः इति पदस्य पञ्चम्यन्तत्वे "प्रातिपदिकात्" इत्यधिकारात् प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन 'अजाद्यतः' इत्यस्य च पञ्चम्यन्तत्वेन द्वयोरेकविभक्तित्वेन विशेष्यविशेषणभावसत्त्वात् "येन विधिस्तदन्तस्य" इति सूत्रेण तदन्तविधौ, अजाद्यन्तात् प्रातिपदिकात् टाप् स्यात् स्त्रीत्वे द्योत्ये इत्यर्थेन पञ्चाजीत्यत्रापि टाबापत्तिः । "समासप्रत्ययविधौ प्रतिषेधः" इति तदन्तविधिनिषेधस्तु न शक्यः । "अमहत्पूर्वग्रहणेन" अनुपसर्जनाधिकारेण च स्त्रीप्रत्यये तदन्तविधिज्ञापकात् ।

इत्थञ्चोक्तदोषवारणाय 'अजाद्यतः' इति पदं सूत्रे षष्ठ्यन्तमेव, तथा सति प्रातिपदिकादित्यस्य पञ्चम्यन्तत्वेन अजाद्यत इत्यस्य च षष्ठ्यन्तत्वेन द्वयोर्विशेषणविशेष्यभावाभावेन तदन्तविध्यभावात्, अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये प्रातिपदिकाट्टाप् स्यादित्यर्थे पञ्चाजीति समासपदे पञ्चाजशब्दसमुदायवाच्यं स्त्रीत्वं वर्तते, न तु अजमात्रशब्दवाच्यं स्त्रीत्वमिति नास्ति काचिदनुपपत्तिरिति भावः ॥८८॥

## शूद्रा ।

"शूद्रा चामहत्पूर्वा जातिः" इति सूत्रस्य(४)शूद्रशब्दः टापं लभते जातिश्चेद्

---

( १ ) ननु शोभनम् आपः यस्मिन् सरसि इति विग्रहे स्वप् शब्दाज्जसि प्राप्तयोर्नुम्दीर्घयोर्मध्ये किङ्कर्तव्यमिति शङ्कायामाह—**अयम्भाव इति ।** (२) **लक्षणप्रतिपदोक्तेति ।** 'लक्षण प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति पूर्णा परिभाषा । ( **३** ) **पञ्चाजीति ।** पञ्चानामजानां समाहारः "अदन्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति "द्विगोः" इत्यनेन ङीपि तत्सिद्धिरिति भावः । ( **४** ) **शूद्रशब्द इति ।** अत्र शूद्री च इत्येको योगः । अमहत्पूर्वा जातिः इत्यपरो योगः । इतरत्र पूर्वयोगे जातेरित्यनुकर्षादाह ।

वाच्या इत्येकोर्थः, महत्पूर्वः शूद्रशब्दः टापं न लभते जातिश्चेद् वाच्येति द्वितीयोऽर्थः। इत्थञ्च शूद्रत्वजातिविशिष्टेति विग्रहे शूद्रशब्दाट्टापि दीर्घे शूद्रेति सिध्यति। महाशूद्रीत्यत्र महत्पूर्वकत्वेन टापोऽभावे "पुंयोग" इति ङीषि सति तत्सिद्धिः ॥ ८९ ॥

## (१) अतिसुत्वरी ।

अयम्भावः—सुधातोः क्वनिप्प्रत्यये "उत्सृष्टानुबन्धग्रहणे सामान्यग्रहणम्" इति परिभाषया "वनो र च" इति सूत्रे क्वनिपो ग्रहणेन तेन सूत्रेण ङीपि रान्तादेशे च कृते उक्तप्रयोगसिद्धिः। "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया प्रत्ययान्ततदादिरूपार्थस्य लाभो भवति, ततश्च प्रत्ययान्ततदादिविशेषणं, प्रातिपदिकञ्च विशेष्यमिति "येन विधिस्तदन्तस्य" इति सूत्रेण पुनस्तदन्तविधौ प्रत्ययान्ततदाद्यन्तरूपं यत्प्रातिपदिकमित्यर्थस्य लाभः।

इत्थञ्च "वनो र च" इति सूत्रस्य वन्नन्तान्तात्प्रातितदिकात् ङीप्, रश्चान्तादेश इत्यर्थो भवति। प्रत्ययान्ततदादि सुत्वनिति तदन्तप्रातिपदिकम् अतिसुत्वन् इति। ततश्चोक्तप्रयोगे ङीप् रान्तादेशश्च सिद्धः ॥ ९० ॥

## टाबृचि ।

अयम्भावः—"पादोऽन्यतरस्याम्" इति सूत्रेण प्राप्तस्य ङीष इदं सूत्रमपवाद इति प्राचीना वदन्ति।

नवीनास्तु एवं वदन्ति-यथा—"शेषाद् विभाषा" इति सूत्राभावपक्षे "पादस्य लोपोऽहस्त्यादिभ्यः" इत्यादिसूत्राणां यथा सावकाशत्वमुक्तम्, तथा "टाबृचि" इति सूत्रस्यापि "पादोऽन्यतरस्याम्" इति सूत्रस्य वैकल्पिकत्वेन तदभावपक्षे सावकाशत्वमेव युक्तम्।

इत्थञ्चास्य पूर्वसूत्रस्यापवादत्वञ्च। परञ्च प्राचीनमतमेव ज्यायः। तथाहि—अपवादशब्दो बाधकपरः। "पादोऽन्यतरस्याम्" इतिसूत्राभावपक्षे "टाबृचि" इति सूत्रं चरितार्थम्, ऋगर्थातिरिक्तार्थे "पादोऽन्यतरस्याम्" इति सूत्रं चरितार्थम्। ऋगर्थे तु द्वयोः प्राप्तौ परत्वात् (१) "टाबृचि" इति टाबेवेति परत्वमूलकं बाधकत्वमुक्तम् ॥ ९१ ॥

---

(१) अतिसुत्वरीति। 'षुञ् अभिषवे' इत्यस्माद्धातोः "सुयजोर्ङ्वनिप्" "ह्रस्वस्य पिति कृति तुक्" इति तुकि सुत्वन् शब्दः। सुत्वानमतिक्रान्ता इति विग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासे सुब्लुकि ङीपि नकारस्य रत्वे अतिसुत्वरीति रूपम्। (२) टाबृचीति। "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये तु पादशब्दसमानार्थकं पदशब्दमवष्टभ्य इदं सूत्रं प्रत्याख्यातम्। न च ऋचि वाच्यायां द्विपदी द्विपात् इति प्रयोगव्यावृत्तये एतत्सूत्रमिति वाच्यम्। एतद्भाष्यप्रामाण्येन तथाविधप्रयोगस्यापीष्टत्वादिति भावः ॥

## कट्टुका ।

अयम्भावः—"प्रत्ययस्थात्कात्" इति सूत्रे पूर्वस्येत्यस्याभावे "तस्मादित्युत्तरस्य" इति परिभाषया अव्यवहितपरस्येत्यंशस्योपस्थितौ प्रत्ययस्थककाराव्यवहितपरस्याकारस्येत्वं स्यादित्यर्थे कट्टुकेत्यत्रेत्वापत्तिः । कट्टुक आ इति दशायाम् "अकः सवर्णे दीर्घः" न शंक्यः । "वर्णादाङ्गं बलीयः" इति परिभाषया सूत्रस्यापवादत्वाच्च सवर्णदीर्घाप्रवृत्तेः । कृते तु पूर्वग्रहणे तत्सामर्थ्यात्परिभाषायाः पूर्वम् अप्रवृत्तौ पूर्वस्याकारस्येत्यादिसूत्रार्थो भवति, ततश्च नास्ति दोषः ॥ ६२ ॥

## भस्त्रैषा ।

अयम्भावः—यत्र भस्त्राशब्दोऽनुपसर्जनं वर्तते तत्र तु "अभाषितपुंस्काच्च" इत्यनेनेत्वं सिध्यति । उपसर्जने तु अनेनेत्वम्, अनेषकेत्यादौ इत्वं न भवति। यतो न सु एतद् सु इति दशायाम् "अन्तरङ्गानपि विधीन्" इति परिभाषया त्यदादित्वात् प्राक् सुपो लुकि ततस्त्यदादित्वे समासरूपप्रातिपदिकाट्टापि समासश्च सुब्विशिष्टस्य जात इति समासघटकसुपः पर एवायं टाप् । असुपः इति प्रतिषेधात् । इह सूत्रे "उदीचामातः स्थाने" इति सूत्रादातः स्थाने इत्यनुवर्तते तच्च स्वशब्दाकारस्य विशेषणं भवति । द्वेषयोस्तु सर्वनामत्वेन टेः प्रागकचि कृते ककारात्पूर्वं ह्रस्वाकारस्य विद्यमानत्वेन आतः स्थानेऽकारस्यासम्भवात् । भस्त्रादीनां सर्वत्रैवातः स्थानिन एवाकारस्य सम्भवेन व्यभिचाराभावात् । स्वशब्दस्तु यत्रात्मीयरूपार्थस्य वाचकस्तत्रैव स्त्रीलिङ्गे वर्तते तथाऽचानुपसर्जनवाचित्वेऽकचि सति अकारस्थानेऽकाराभावेनोदाहरणं न भवति, किन्तु यत्रोपसर्जनवाची स्यात्तत्र सर्वनामत्वाभावेन कप्रत्यये कृते उदाहरणं सम्भवति । तथा च स्वस्या निष्क्रान्तेति विग्रहे उपसर्जनह्रस्वे टापि आज्ञाता निःस्वा निःस्विका निःस्वकेति रूपद्वयं सिद्धम् । आत्मीये स्विकेति नित्यमित्वम् । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशः ॥ ९३ ॥

## अनुपसर्जनात् ।

अयम्भावः—अस्य सूत्रस्योपसर्जने ङीबादीनां निवृत्तिः फलम् । तच्च तदन्तविधिं विना न सम्भवतीति इदं सूत्रं व्यर्थं(१) सत् स्त्रीप्रत्यये तदन्तविधिं ज्ञापयति ।

---

(१) व्यर्थमिति । ननु बहवः कुरुचराः यस्यां सा बहुकुरुचरा, नदमतिक्रान्ता अतिनदा, इत्यादिषु उपसर्जनेषु कुरुचरनदादिशब्देभ्यः "टिड्ढाणञ्" इत्यादिना विधीयमानानां ङीबादिप्रत्ययानां प्रसक्तिरेव नास्ति । "समासप्रत्ययविधौ" इति प्रतिषेधात् । तस्मादनुपसर्जनाधिकारो व्यर्थ एवेति भावः । तदेव व्यर्थं सज्ज्ञापयतीति मूले स्पष्टम् ।

तथाच-बहुकुरुचरा(१)शब्दे यद्धि कुरुचरेति टित् न तदनुपसर्जनमिति ङीपाऽभावः सूत्रस्य फलम्भवति ।

न च "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्" इतिन्यायेन स्त्रियामिति टिदादीनामेव विशेषणम् । तथा च—स्त्रियां विद्यमानं यत् टिड्ढादि, तदन्तान्ङीबित्यर्थे कुरुचरशब्दस्य स्त्रियामभावेन ङीब्विधायकसूत्रस्य प्राप्तिरेव नेति वाच्यम् । प्राधान्यात्सूत्रारम्भसामर्थ्याच्च "स्त्रियाम्" इत्यस्य प्रातिपदिकविशेषणत्वात् । अन्यथा पुनरपि सूत्रं व्यर्थं स्यात् ।

न च प्राधान्यात् "अनुपसर्जनात्" इति प्रातिपदिकविशेषणं स्यात्तथा च बहुकुरुचरेति प्रातिपदिकमनुपसर्जनमेवेति ङीप् स्यादेवेति वाच्यम् । सूत्रारम्भसामर्थ्येन अनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वात् । एवञ्चानुपसर्जनं यत् टिदादितदन्तमिति मूलार्थः सम्पद्यते ॥ ९४ ॥

## (२) वक्ष्यमाणा ।

ननु "न ल्यपि" इति सूत्रारम्भसामर्थ्येन अनुबन्धकार्ये कर्त्तव्येऽनल्विधाविति निषेधाभावेन स्थानिवत्त्वात् टित्त्वधर्ममवलम्ब्य वक्ष्यमाणेत्यत्र ङीप्कथन्न स्यादिति चेत् न । याऽसुटो ङित्त्वेन लाश्रयमनुबन्धकार्यम् आदेशानां न भवतीति निषेधात् ।

न च "पिच्च ङिन्न ङिच्च पिन्न" इति भाष्येण यासुटो ङित्त्वं तत्र सार्थकमिति वाच्यम् । "हलः श्नः शानज्झौ" इति सूत्रे शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽपि "अनल्विधौ" इति निषेधो भवतीति ज्ञापनात् । एवञ्चात्र स्थानिवद्भावो न भवतीति ङीपोऽप्रवृत्तिरिति भावः ॥ ९५ ॥

## चौरी ।

चुरा शीलमस्या इति विग्रहे "शीलं छत्रादिभ्यो णः" इति णप्रत्यये, वृद्धौ आकारलोपे "ताच्छीलिकेणेऽपि" इति वचनात् ङीपि चौरीति सिध्यति । उक्तवचने प्रमाणञ्च "कार्मस्ताच्छील्ये" इति सूत्रम् । अन्यथा शीलार्थेऽणप्रत्यये प्रकृतिभावविधायकस्य 'अन्' इति सूत्रस्याप्रवृत्तौ "नस्तद्धिते" इति सूत्रेणैव टिलोपे सिद्धे टिलोपनिपातनार्थं "कार्मस्ताच्छील्ये" इति सूत्रं व्यर्थमेवेति भावः ॥ ९६ ॥

---

(१) **बहुकुरुचरेति** । बहवः कुरुचराः यस्यामिति विग्रहः । बहुव्रीहिरयमन्यपदार्थप्रधानः । ततश्च टितः टप्रत्ययस्य उपसर्जनत्वान्न ङीप् । अनुपसर्जनस्य प्रातिपदिकविशेषणत्वे तु ङीबत्र दुर्वार इति भावः । (२) **वक्ष्यमाणेति** । वच्धातोर्लृटि तत्स्थाने शानचि "स्यतासी" इति स्ये कुत्वषत्वे "आने मुक्" इति मुगागमे सति निष्पन्नं वक्ष्यमाण इत्यत्र स्थानिवद्भावेन टित्वमुगित्वमानीय ङीपि प्राप्ते तन्निवारणायोच्यते—**नन्वित्यादिना** ।

## विभाषा सपूर्वस्य।

अयम्भावः—सहशब्दो विद्यमानवाची पूर्वशब्दश्चावयववाचीति(१) केवलपतिशब्दस्य विद्यमानावयवत्वं न सम्भवतीति पतिशब्देन तदन्तं गृह्यते। अत एव पतिशब्दान्तस्य गृह्यमाणत्वेन "अनुपसर्जनात्" इति पूर्वोक्तरीत्या पतिशब्दान्तस्यैव विशेषणम्। तेन दृढपत्नीत्यादौ बहुव्रीहिसमासेऽपि सूत्रप्रवृत्तिः। "अनुपर्जनात्" इति चोत्तरार्थमनुवर्तते, तस्य चात्रापि सम्बन्धः। बहवो वृषलपतयो यस्या इति विग्रहे नादेशवारणार्थमत्रापि अनुपसर्जनाधिकारफलम्॥ ९७॥

## वृषलस्य पत्नीति कथम्?

अयम्भावः—वृषलस्य यज्ञेऽधिकाराभावेन "पत्युर्नो यज्ञसंयोगे" इति सूत्राप्रवृत्तिः, समासाभावेन विद्यमानपूर्वत्वाभावात् "विभाषा सपूर्वस्य" इत्यस्यात्र प्रवृत्तिरिति न शङ्कनीयम्। पत्नीव पत्नीति समाधानात्।

यथा—पाणिगृहीतीभार्यायां यज्ञाधिकारस्तथैव लक्षणया अस्या अपि यज्ञाधिकारः कल्पनीय इति "पत्युर्नो यज्ञ" इति सूत्रेण सिद्धिः॥ ९८॥

## (२) नागी स्थूला।

अयम्भावः—यादृशं स्थौल्यं गजे वर्तते तादृशमेव स्थौल्यं यदि भार्यायां विद्येत तदा स्थौल्यगुणस्य योगात्सम्बन्धाद्धेतोर्गजवाचीनागशब्दः स्त्रियां प्रयुज्यते। एवञ्च स्थूलगुणविशिष्टा भार्या नागीति कथ्यते। अयमेव च नागीशब्द उदाहरणम्भवति। अथ च सर्पविषये यादृशं दैर्घ्यं वर्तते तादृशं दैर्घ्यं यदि कस्याञ्चित् भार्यायां स्यात्तदा तादृशस्य दैर्घ्यगुणस्य सम्बन्धात्सर्पवाचको नागशब्दो भार्यायां प्रयुज्यते। ततश्च नागा भार्या इति प्रत्युदाहरणं भवति॥ ९९॥

## उतः किम्? शुचिः।

अयम्भावः—"वोतो गुणवचनात्" इति सूत्र उत इति पदाभावेऽपि अत इत्यस्य सम्बन्धेनाकारान्तादेव ङीष् इति शुचिशब्देऽकारान्तत्वाभावेन ङीष् न स्यादिति न शङ्कनीयम्। "खरुसंयोगोपधान्न" इति वार्तिकवयर्थ्यात्।

यद्युक्तसूत्रस्याकारान्ते प्रवृत्तिस्तदा खरुशब्दे प्रवृत्त्यभावेन निषेधार्थकं वार्तिकमेव

---

(१) अवयववाचीति। न तु दिक्कालान्यतरावच्छिन्नवाचीति भावः। विद्यमानः पूर्वावयवो यस्मिन्प्रातिपदिके तस्य प्रातिपदिकस्यावयवो यः पतिशब्दस्तस्य नकारादेश इत्यर्थः।

(२) नागीति। ननु गजवाचकनागशब्दस्य जातिवचनत्वेन "जातेरस्त्रीविषयादयोपधात्" इत्येव ङीषि सिद्धे व्यर्थमेवात्र सूत्रे तद्ग्रहणमित्याशङ्क्य समाधत्ते—गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त प्रत्युदाहरणमिति।

ऽव्यर्थम् । न च "कृदिकारादक्तिनः" इत्यनेन ङीषि शुचिः, शुचीति रूपद्वयं सिद्धं स्यादिति वाच्यम् । उणादीनामव्युत्पन्नत्वात् ।

वस्तुतस्तु "कृदिकारात्" इति ङीपि शुचीति रूपसिद्धौ शुक्लेति प्रत्युदाहरणं बोध्यम् । "खरुसंयोगोपधान्न" इति निषेधे तु पीतेति प्रत्युदाहरणं ज्ञेयम् । 'संयोगोपधान्न' इति निषेधस्तु खरुसाहचर्यादुकारान्ते, एवेति व्याख्याने तु शुक्लाऽपि प्रत्युदाहरणम् ॥ १०० ॥

## ब्रह्माणी ।

अयम्भावः—"इन्द्रवरुणभव" इति सूत्रे ब्रह्मन्शब्दस्य पाठाभावात् ङीपः, आनुगागमस्य चाभावेन ब्रह्माणीति शब्दश्च न सेत्स्यतीत्यभिप्रेत्याह—कथं ब्रह्माणीति । ब्रह्माणमानयति जीवयतीति विग्रहे कर्मणि उपपदे "कर्मण्यण्" इति सूत्रेण अण्प्रत्ययेऽणन्तत्वात् ङीपि सति नलोपादिकार्ये च कृते ब्रह्माणीति सिद्धम् ॥ १०१ ॥

## अद्रवम् ।

अयम्भावः—"स्वाङ्गाच्चोपसर्जनात्" इति सूत्रे यदि स्वं तदङ्गञ्चेति यौगिकं स्वाङ्गं गृह्येत, तदा 'सुमुखा शाला' इत्यत्रापि स्यात्, यतो द्वाररूपमुखस्य शालाङ्गत्वात् ।

सुकेशी रथ्या इत्यत्र च न स्यात् केशस्य रथ्याङ्गत्वाभावात् । अतः स्वाङ्गस्य लक्षणान्तरं क्रियते—'अद्रवम्मूर्तिमत्' इत्यादि । सुस्वेदेत्यत्र द्रवयुक्तत्वेन ङीपोऽभावः । सुज्ञानेत्यत्र मूर्तत्वाभावेन ङीषोऽभावः । सुमुखा शालेत्यत्र मुखस्य प्राणिस्थत्वाभावेन ङीषोऽभावः । सुशोफेत्यत्र शोफस्य विकारजत्वेन ङीषोऽभावः । सुकेशी रथ्येत्यत्र केशस्य प्राणिनि दृष्टत्वेन साम्प्रतं प्राणिनि अविद्यमानत्वेऽपि ङीष् भवति । सुस्तनी प्रतिमेत्यत्र यथा स्त्रीरूपप्राणिनि स्तनौ विद्येते, तथा प्रतिमायामपि तौ विद्येते इति ङीष् भवति तस्मिन् न तिष्ठतीत्यतत्स्थम्, परञ्च तत्र नाम प्राणिनि दृष्टं स्यात् । तेन तज्जातीयेनावयवेन प्राणी यथा सम्बद्धस्तथा तदङ्गं यदि युतं सम्बद्धं स्यात्तदपि स्वाङ्गपदेन गृह्यते, अन्यत् स्पष्टम् ॥ १०२ ॥

## आकृतिग्रहणा ।

अयम्भावः—ईदृशाकारो गौरीत्युपदिष्टे पुच्छलाङ्गलादिः आकृतिदर्शनेन गवादिषु जातिर्गृह्यते, तदा ह्यनु(१)गतेति अनुगतमेकाकारेण प्रतीतं यत् संस्थानमवयवसन्निवेशस्तेन व्यङ्ग्या या सा जातिरित्यर्थः ।

तथा च–नद्यादीनां जलसमीपदेशो यत्र यत्र वर्तते तत्र तत्र तट इति बुद्धिर्जायते इति तटशब्दादपि जातिलक्षणो ङीष् भवति । परञ्चैतल्लक्षणं वृषलत्वादीनां जाति-

---

(१) अनुगतेति । सर्वासु घटादितत्तद्व्यक्तिषु एकरूपतत्तदाकारव्यङ्ग्येति भावः ।

त्वे साधकं न भवति यतः हस्ताद्यवयवसन्निवेशो यथा ब्राह्मणादीनां वर्तते, तथा शूद्रस्यापि वर्तते इति आकृत्या ग्रहणं न भवतीति 'लिङ्गानां च न सर्वभाक्' इति लक्षणान्तरं क्रियते । एकस्यां ब्राह्मणादिव्यक्तौ एकवारं कथनादुपदेशात् द्वितीयव्यक्तौ कथनं विनापि जातेर्ज्ञानं सुलभं भवतीति वृषलीत्यादौ ङीप् भवति ।

औपगवादिशब्दाः सर्वलिङ्गे वर्तन्ते, अथ च हस्ताद्यवयवोऽपि नास्तीति उक्तलक्षणद्वयेन न सिध्यतीति तृतीयलक्षणं क्रियते 'गोत्रञ्च(१) चरणैः सह' इति ॥१०३॥

इति स्त्रीप्रत्ययाः ।

# अथ विभक्त्यर्थाः ।

## प्रातिपदिकार्थः ।

अयम्भावः—जातिव्यक्तिलिङ्गानीति त्रीणि प्रातिपदिकार्थं इति पक्षे प्रातिपदिकार्थेनैव लिङ्गस्यापि ग्रहणे सिद्धे लिङ्गग्रहणं व्यर्थं सत् (२)नियतोपस्थितिकः प्रातिपदिकार्थः इति विलक्षणप्रातिपदिकार्थं बोधयति । तदर्थश्च यस्मिन् प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेन भानं भवति स प्रातिपदिकार्थः इति । कृष्ण इत्यादौ पुंस्त्वविशिष्टवसुदेवापत्यरूपार्थस्य नियमेन बोधो भवतीति तत्र प्रथमा सिध्यति ॥ १०४ ॥

## द्रोणो व्रीहिः ।

अयम्भावः—द्रोणशब्दात् व्रीहिशब्दाच्च प्रातिपदिकार्थे प्रथमायां द्वयोरपि प्रातिपदिकार्थत्वेन नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति सिद्धान्तेन नीलो घट इत्यादौ यथा नीलाभिन्नो घट इति शाब्दबोधो भवति, तथवात्रापि द्रोणाभिन्नो व्रीहिरित्यनिष्टशाब्दबोधः स्यात्; तन्निरासाय द्रोणशब्दात्परिमाणार्थे प्रथमा । एवञ्च द्रोण इत्यस्य परिमाणार्थत्वेन व्रीहेश्च प्रातिपदिकार्थत्वेन, 'नामार्थयोः' इति सिद्धान्तस्याविषयेणानिष्टशाब्दबोधो न भवति; किन्तु द्रोणशब्दस्य विशेषपरिमाणार्थत्वेन प्रत्ययस्य च सामान्यपरिमाणार्थत्वेन सामान्यविशेषयोरभेदान्वय इति, परिमाणस्य परिच्छेदकभावेन परिमेयेऽन्वय इति च सिद्धान्तद्वयेन द्रोणरूपं

---

(१) **गोत्रञ्चेति ।** गोत्रशब्देन अपत्यं विवक्षितम्, नतु पौत्रप्रभृति पारिभाषिकम्, व्याख्यानात् । अत एव अनन्तरापत्यप्रत्ययान्ते अवन्तीत्यत्र जातिप्रयुक्तो ङीबिति 'अनुपसर्जनात्' इति सूत्रस्थभाष्यं सङ्गच्छते । नागेशस्तु पारिभाषिकमेव गोत्रमिह स्वीकरोतीति दिक् ।

(२) ननु स्वार्थद्रव्यलिङ्गसंख्याकारकेति पञ्चविधः प्रातिपदिकार्थ इति पक्षे स्वार्थद्रव्यलिङ्गेति त्रिविधप्रातिपदिकार्थपक्षे च कृष्णादिशब्दे लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणं व्यर्थमित्यत—आह—**नियतोपस्थितिक इति ।**

यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति शाब्दबोधो भवति । तदुक्तं मूले—द्रोण रूपमिति ॥ १०५ ॥

## (१) एकः ।

अयम्भावः—एकशब्दस्य एकत्वरूपसंख्या एवार्थं इति अनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वमिति वचनेन एकशब्दादेकवचनमेव युक्तमिति । एकत्वरूपार्थस्यैकशब्दः सुप्रत्ययश्च वाचक इति "उक्तार्थानामप्रयोगः" इति न्यायेन सुप्रत्ययस्याप्राप्तिरिति तत्सिद्धये सूत्रे वचनग्रहणम् । तत्सामर्थ्याच्चात्र 'उक्तार्थानामप्रयोगः' इति न्यायो न लगतीति सुविभक्तिसिद्धिर्भवति । एवं द्वावित्यादावपि बोध्यम् ॥ १०६ ॥

## कर्तुः किम् ।

अयम्भावः—कर्तृग्रहणाभावेऽपि, कारकवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारिका या इच्छा तादृशेच्छोद्देश्यताश्रयः कर्मेति सूत्रार्थेन देवदत्तो हरिं भजतीत्यादौ कारकम् देवदत्त इति तद्वृत्तिव्यापारो भजनानुकूलरूपस्तत्प्रयोज्यं फलं प्रसन्नतारूपं तदाश्रयत्वप्रकारिकेच्छा हरिर्मन्निष्ठव्यापारजन्यप्रीत्याश्रयो भवतु इत्याकारिका तादृशेच्छोद्देश्यताश्रयो हरिरिति तत्र कर्मत्वसिद्धावपि माषेष्वश्वं बध्नातीत्यत्र माषाणामपि कर्मत्वप्रसक्तिरिति कर्तृग्रहणं कृतम् । कृते च कर्तृग्रहणे माषाणां कर्मत्वन्न प्राप्नोति । कारकपदेन कर्तृकारकस्य ग्रहणे (२)नास्ति माषाणां कर्मत्वापत्तिः, अपितु कारकपदेन कर्मकारकस्य ग्रहणे पूर्वोक्तप्रयोगे दोषः । तथाहि—कारकम् अश्व इति तद्वृत्तिव्यापारो गलबिलाधःसंयोगानुकूलरूपस्तत्प्रयोज्यं फलं गलबिलाधःसंयोगरूपं तदाश्रयत्वप्रकारिकेच्छा माषा गलबिलाधःसंयोगवन्तो भवन्त्वेतादृशेच्छातदुद्देश्यताश्रया माषा इति तत्र कर्मत्वं दुर्वारम् ॥ १०७ ॥

## पयसा ओदनं भुङ्क्ते ।

अयम्भावः—तमब्घटितसूत्रमेव किमर्थम् ? तत्स्थाने कर्तुरुद्देश्यं कर्मेति सूत्रं कर्त्तव्यम् । तथाच—कर्तुर्यदुद्देश्यं तत्र कर्मसंज्ञा स्यादित्यर्थेन हरिं भजतीत्यत्र

---

**(१) एकेति** । ननु पञ्चकं प्रातिपदिकार्थः इति स्वीकारे संख्याया अपि प्रातिपदिकार्थत्वात्तत्रैवैकादिशब्देभ्योऽपि प्रथमासिद्धौ सूत्रे वचनग्रहणं व्यर्थमिति चेत्, न । 'उक्तार्थानामप्रयोगः' इति न्यायविरोधेनैकादिशब्देभ्यः प्रातिपदिकार्थे प्रथमाऽप्राप्त्या तदर्थमिह वचनग्रहणस्यावश्यकत्वादित्याशयेनाह—मूले—**वचनं संख्येति** । **(२) कर्तृकारकस्य ग्रहणे इति** । तेन कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यत्वं कर्मत्वमित्यर्थः सम्पन्नः । तथा च—प्रकृते माषेषु अश्वं बध्नातीत्यत्र अश्वनिष्ठो यो व्यापारः स कर्तृवृत्तिर्नास्तीति तदर्थं कर्तृग्रहणमावश्यकमिति भावः ।

हरिः फलाश्रयत्वेनोद्देश्यमस्तीति तत्र कर्मसंज्ञा सिद्धा भवति। अथ च कृतभोजनस्य पुरुषस्य पयोलोभेन पुनरपि भोजने प्रवृत्तौ सत्याम् पयसा ओदनं भुङ्क्ते, इति प्रत्युदाहरणेऽपि लोभाद्धेतोः पयसोऽप्युद्देश्यत्वेन तत्र कर्मसंज्ञा दुर्निवारा तद्दोषनिवारणार्थञ्च "कर्तु(१)रीप्सित" इत्यादिसूत्रं कर्त्तव्यम्। इत्थञ्च भोजनसमये पयसोऽभावेन कर्त्ता देवदत्तस्तद्वृत्तिव्यापारो गलबिलाधःसंयोगानुकूलरूपस्तत्प्रयोज्यं फलं गलबिलाधःसंयोगरूपं तदाश्रयत्वप्रकारिकेच्छा ओदनो गलबिलाधःसंयोगवान् भवतु इत्याकारिका न तु पयो गलबिलाधःसंयोगवद् भवतु इत्याकारिका, एतादृशेच्छोद्देश्यताश्रय ओदनो न तु पयः, इति ओदनस्यैव कर्मसंज्ञा भवति न तु पयसः ॥ १०८ ॥

## (२) अर्थनिबन्धना।

अत्र प्रमाणञ्च—"अहमपीदमचोद्यं चोद्ये" इति भाष्यमेव। अन्यथा दुह्यातोर्दुहादिषु पाठाभावेनाहं चोद्ये इति गौणे कर्मणि प्रत्ययो दुर्लभः स्यात् ॥ १०९ ॥

## गतिबुद्धि इति।

अयम्भावः—ण्यन्ते उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापार इत्याद्यर्थे णिजर्थनिरूपितकर्मत्वं गम्धात्वर्थनिरूपितकर्तृत्वञ्च प्राप्तमिति परत्वात्कर्तृसंज्ञैव भवति। प्रथमव्यापाराश्रयत्वेन कर्तृसंज्ञा द्वितीयव्यापारप्रयोज्यफलाश्रयत्वेन कर्मसंज्ञा च प्राप्नोति। अन्तरङ्गाऽपि कर्तृसंज्ञा अथ च यावत् गमयति देवदत्तं यज्ञदत्त इत्यादौ देवदत्तस्य कर्तृसंज्ञा न जायते, तावत् हेतुसंज्ञैव न स्यात्, यतः कर्तृप्रयोजकस्य हेतुसंज्ञा भवति, अथ च हेतुसंज्ञां विना णिजपि न स्यादिति। कर्मसञ्ज्ञायामुपजीव्याऽपि कर्तृसंज्ञा। एवञ्चोक्तहेतुभिर्देवदत्तस्य कर्तृसंज्ञैव सिद्धा भवतीति "गतिबुद्धि" इत्यादिसूत्रं विध्यर्थमिति मनोरमाकारादीनां मतम्।

परञ्च प्रयोजकव्यापारे शब्दतः प्राधान्यमथ चान्यानधीनत्वलक्षणार्थप्राधान्यञ्च वर्तते, इति 'प्रधानकार्यं सर्वतो बलवत्' इति न्यायेन प्रधानाश्रयकर्मसंज्ञैव देवदत्तस्य सिद्ध्यति कर्तुरित्यनेनैव कर्मत्वे सिद्धे "गति" इत्यादिसूत्रं णिजर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञा चेत्तर्हि गत्याद्यर्थानामेव कर्तुरिति नियमयति। तेन पाचयति देवदत्तेन इत्यादौ कर्मसंज्ञा न भवतीति फलमिति भाष्यकारादीनां मतम्।

अथ च यथा लोके प्रधानम्प्रति सर्वेऽन्तरङ्गादयो मनुष्या विफलीभवन्ति, तथैवा-

---

(१) **कर्तुरीप्सितेत्यादि**। तस्य चायमर्थः—प्रकृतधातूपात्तकर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यत्वम्। (२) **अर्थनिबन्धनेति**। "अकथितञ्च" इत्यनेन या संज्ञा सा अर्थनिबन्धना अर्थनिमित्तका, नतु स्वरूपाश्रया-स्वरूपनिमित्तकेत्यर्थः इति भावः।

न्याप्यन्तरङ्गादयो हेतवो निष्फला इति कर्मत्वापेक्षया कर्तृसंज्ञा दुर्बलेति तत्त्वम्। उदाहरणानि तु मूले स्फुटानि ॥ ११० ॥

## दृशेश्च ।

अयम्भावः—"गति" इत्यादिसूत्रे सामान्यं ज्ञानं गृह्यते, विशेषज्ञानञ्चेति दृश्-धातोश्चाक्षुषज्ञानमर्थो भवतीति चाक्षुषज्ञानस्यापि ग्रहणे भक्ता हरिं पश्यन्ति श्रीहरिः प्रेरयतीति श्रीहरिर्भक्तान् हरिं दर्शयतीत्यादौ "गति" इत्यादिसूत्रेणैव कर्मत्वे सिद्धे "दृशेश्च" इति व्यर्थमेव। तदेव व्यर्थं सत् (१) सामान्यज्ञानार्था ये धातवस्तेषां "गति" इत्यादि सूत्रे ग्रहणं भवति, न तु विशेषज्ञानार्थानामिति ज्ञापयति। तेन चाक्षुषज्ञानार्थं "दृशेश्च" इति स्वांशे चरितार्थम्। फलञ्च स्मारयति घ्रापयतीत्यादौ विशेषज्ञानार्थकधातुयोगे नवगणीकर्तुः कर्मत्वाभावः ॥ १११ ॥

## येषां देशकालादिभिन्नम् ।

अयम्भावः—ण्यन्ते उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापार इत्यादि धात्वर्थेन ग्रामदेवदत्तयोरुभयोरपि "कर्त्तुरीप्सित" इत्यनेनैव कर्मसंज्ञासिद्धौ "गति" इत्यादिसूत्र व्यर्थं सत् नियमार्थम्, नियमश्च—नियमस्य सजातीयापेक्षत्वेन सकर्मकाणां धातूनां णिजर्थव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञा चेत्तदा गत्याद्यर्थानामेवेति। एवञ्चाकर्मकाणां धातूनां "कर्त्तुः" इत्यनेनैव कर्मसंज्ञासिद्धौ अकर्मग्रहणं व्यर्थं सत् 'येषां देशकालादिभिन्नम्' इत्याद्यर्थमेव बोधयति। तथा च–मासमासयति देवदत्तमित्यादौ कर्मसंज्ञा भवति, पाचयति देवदत्तेनेत्यादौ तु न ॥ ११२ ॥

## पापेऽभिनिवेशः ।

अयम्भावः—"परिक्रयणे सम्प्रदानमन्यतरस्याम्" इति सूत्रादन्यतरस्यां ग्रहणमनु(२)वर्त्य व्यवस्थितविभाषाश्रयणञ्च कृत्वा क्वचिदाधारस्य कर्मसंज्ञा न भवतीति पापेऽभिनिवेश इत्यत्र कर्मत्वाभावः। प्रमाणञ्च—"एष्वर्थेष्वभिनिविष्टानाम्" इति भाष्यम्।

केचित्तूक्तभाष्यप्रयोगेण यत्राभिनिविश् इत्यानुपूर्व्यां विकारो न भवति तत्रैव

---

(१) सामान्यज्ञानार्था इति। 'विद्–ज्ञाने, ज्ञा–अवबोधने, इत्यादीनामेव ग्रहणं, नतु ज्ञानविशेषवाचिनामिति भावः। (२) अनुवर्त्येति। ननु 'परिक्रयणे सम्प्रदानमन्यतरस्याम्" "आधारोऽधिकरणम्" "अधिशीङ्स्थासां कर्म" "अभिनिविशश्च" इति सूत्रक्रमः। तत्र "अभिनिविशश्च" इत्यत्र कथमन्यतरस्यां ग्रहणानुवृत्तिः। "आधारोऽधिकरणम्" अधिशीङ्स्थासां कर्म" इत्यत्र च तदनुवर्तनाभावात्। इति चेदत्र मण्डुकप्लुतया तदनुवृत्तिः स्वीकार्या। मण्डुकाः यथा मध्ये पदानि सन्ततमप्रक्षिपन्त एव उत्प्लुत्य गच्छन्ति तद्वदिति भावः।

कर्मसंज्ञा भवति, पापेऽभिनिवेश इत्यत्रैकारस्यैकाररूपविकारो जात इति तत्र कर्म संज्ञा न स्यादित्यनुपूर्त्याद्विक्लेशो वृथैवेति वदन्ति ॥ ११३ ॥

## (१) जपमनुप्रावर्षत्

अयम्भावः—"अनुर्लक्षणे" इत्यनेन कर्मप्रवचनीयसंज्ञायां "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयायां जपमनु इति वाक्यघटकजपमित्यस्य सिद्धिः । सम्बन्धश्चात्र लक्ष्यलक्षणभावः ।

लक्षणत्वञ्च—ज्ञानजनकज्ञानविषयत्वम् । लक्ष्यत्वञ्च ज्ञानजन्यज्ञानविषयत्वम् । ज्ञानं वर्षणज्ञानं तज्जनकं ज्ञानं जपज्ञानं तद्विषयता जपे । ज्ञानं जपज्ञानं तज्जन्यं ज्ञानं वर्षणज्ञानं तद्विषयता वर्षणे इति लक्षणसमन्वयः ।

अथ च यदैव ब्राह्मणद्वारा जपो जातस्तदैव देवकर्तृकं वर्षणमपि जातमिति वर्षणे जपो हेतुर्भवति । तथाच-"हेतौ" इति परत्वात् तृतीयया भाव्यमिति न शङ्कनीयम् । यतः "लक्षणेत्थम्" इत्यादिना संज्ञाविधाने सिद्धे पुनः संज्ञाविधानसामर्थ्यात् ।

नच विजातीयया संज्ञया तृतीयाया विभक्तेर्बाधः कर्तुं न शक्य इति वाच्यम् । संज्ञाविधानबोधितद्वितीयाविधानसामर्थ्यादित्यर्थात् ॥ ११४ ॥

## सर्पिषोऽपि स्यात् ।

अयम्भावः—स्यादिति सम्भावनायां लिङ् अपिशब्दस्य कर्तृदौर्लभ्यप्रयुक्तदौर्लभ्यत्वसम्बन्धेन स्याक्रियया सह सम्बन्धः । अप्रयुज्यमानबिन्दुरूपपदार्थम् अपिशब्दो द्योतयतीति बिन्दुना योगे सर्पिष इत्यवयवावयविभावसम्बन्धे षष्ठी । 'कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वं कर्मप्रवचनीययुक्तत्वम्' इति लक्षणेन सम्बन्धस्य प्रतियोगी बिन्दुरेव न तु सर्पिरिति सर्पिष् शब्दात् द्वितीया न ॥ ११५ ॥

## गङ्गायां घोषः ।

अयम्भावः—कारकाधिकारात् करणमिति, क्रियते येनेति ल्युडन्तमहासंज्ञया च साधकार्थे लब्धे साधकग्रहणमेव साधकतमार्थम्भविष्यतीति तमब्ग्रहणं व्यर्थं सत् "अस्मिन् कारकप्रकरणे शब्दसामर्थ्यगम्यार्थो नाश्रीयत' इति ज्ञापयति । एवञ्च तमब्ग्रहणाभावेऽतिशयरूपार्थलाभो न स्यादिति तमब्ग्रहणं स्वांशे चरितार्थम् । फलञ्च गङ्गायां घोष इति गौणाधारे सप्तम्याः सिद्धिः । अन्यथा अधिक्रियते स्थाप्यते यत्रेति ल्युडन्तव्युत्पत्त्यैवाधारपदार्थे सिद्धे आधारपदं व्यर्थं सत् सर्वावयवव्याप्तौ यस्य आधारस्तत्रैवाधिकरणसंज्ञा स्यादिति लाभार्थं स्यात् । एवञ्च तिलेषु तैलमित्यादावेव सप्तमी स्यात् ॥ ११६ ॥

---

(१) जपमनुप्रावर्षदिति । जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः ।

## (१) अन्यकर्तृकः ।

अयम्भावः-अन्यो नाम अभिलष्यतिकर्म तत्कर्ता यस्य स अन्यकर्तृकः एवंभूतोऽभिलाषो रुच्धात्वर्थः रुच्धातुयोगे भक्तिपदं कर्तृ भवति, अभिपूर्वकलषधातुयोगे तु भक्तिपदं कर्म भवतीति स्थूलताया भेदो भवति । सूक्ष्मरूपेण भेदस्तु यत्किञ्चिन्निष्ठप्रीतिजनकः प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्त्ता । अथ च यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिसमानाधिकरणो यो व्यापारस्तदाश्रयोऽभिलष्यतेः कर्त्तेति ॥ ११७ ॥

## चैत्रात्पूर्वः फाल्गुनः ।

अयम्भावः—दिशि(२) दृष्टः शब्दो दिक्शब्दः इति दिक्शब्दस्य व्याख्यायां यः शब्दः कदाचित् दिशाया वाचकः स्यात्प्रयोगकाले दिशाया वाचको भवेन्न वा भवेत्तथापि तद्योगे पञ्चमी भवत्येव । तथाच-चैत्रात्पूर्वः फाल्गुन इत्यादौ पूर्वशब्दः कालस्य वाचको वर्तते न तु दिशायाः, परञ्च तद्योगे चैत्रादिति पञ्चमी सिद्धा ।

अथ चाञ्चूत्तरपदस्य(३) प्राक् प्रत्यक् इत्यादेरपि दिशावाचकत्वाद्दिक्शब्दत्वेनैव तद्योगे पञ्चम्यां सिद्धायां पुनरञ्चूत्तरपदग्रहणं "षष्ठ्यतसर्थप्रत्ययेन" इति सूत्रविहितषष्ठ्या बाधनार्थम् । तथाच प्राक् प्रत्यक् इत्यादौ "दिक्शब्देभ्यः" इत्यादिसूत्रविहितस्यास्तातिप्रत्ययस्य अञ्चेर्लुक् इति लुकि तद्योगे षष्ठी न भवति, किन्तु पञ्चम्येव ॥ ११८ ॥

## भवात्प्रभृति ।

अयम्भावः—"अपादाने पञ्चमी" इति सूत्रे भाष्यध्वनितेन(४) "प्रभृत्यर्थयोगे पञ्चमी' इति वचनेन भवादित्यत्र पञ्चमी सिद्ध्यति । एव(५)मारभ्येत्यादियोगेऽपि पञ्चमी सिद्धा भवति। अत्रत्यशेखरादिग्रन्थो महान् क्लिष्टः इति तल्लेखो न कृतः ॥११९॥

---

(१) ननु अभिलषते रुचधातुसमानार्थकतया हरये रोचते भक्तिरित्यत्रैव हरिर्भक्तिमभिलष्यतीत्यत्राप्यर्थग्रहणसामर्थ्यात्परामपि कर्मसंज्ञां बाधित्वा सम्प्रदानसंज्ञा कुतो नेत्याशंक्याह—**अन्यकर्तृक इति । (२) दिशि दृष्ट इति ।** रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते । नतु ऐन्द्री कौबेरीत्यादय इति भावः । **(३) अञ्चूत्तरपदस्येति ।** अञ्चुधातुः उत्तरपदं यस्य सः अञ्चूत्तरपदः प्रागादिदिक्शब्दः न तु 'सध्र्यङ्' इत्यादिशब्दोऽपि; दिक्शब्दसाहचर्यात्तु सध्र्यङ् देवदत्तेन इत्यत्र न पञ्चमीति भावः । **(४) प्रभृत्यर्थयोगे इति ।** प्रभृतिशब्दाभावेऽपि तदर्थ सत्त्वात् पञ्चमी भवतीत्यपि ज्ञेयम्, यथा—कार्तिक्याः आग्रहायणीमासे इत्यत्र । **(५) आरभ्येति ।** प्रभृतिशब्दपर्यायशब्दयोगेऽपि पञ्चमी ज्ञेया । अन्यथा आरभ्येति क्रियापेक्षया "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति परिभाषया द्वितीया स्यादिति भावः ।

## बहिर्योगे पञ्चमी।

अयम्भावः—वर्जनार्थयोरपपर्योः कर्मप्रवचनीयसंज्ञायां तयोर्योगे "पञ्चम्यपाङ्परिभिः" इति सूत्रेण पञ्चम्येव भविष्यतीति तयोः साहचर्येणाञ्चूत्तरपदयोगेऽपि पञ्चम्या एव सिद्धत्वेन पञ्चम्यन्तेन समासे सिद्धे "अपपरिबहिः" इति सूत्रे पञ्चमीपदं व्यर्थं सत् बहिर्योगे पञ्चमी भवतीति ज्ञापयति। तेन (१) ग्रामाद्बहिरिति सिद्धम् ॥ १२० ॥

## ज्ञोऽविदर्थस्य।

अयम्भावः—"ज्ञोऽविदर्थस्य करणे" इत्याद्यष्टसूत्रीविषये शेषत्वेन विवक्षिते "षष्ठी शेषे" इति सूत्रेणैव षष्ठ्यां सिद्धायामष्टसूत्री व्यर्था सती अष्टसूत्र्या या या षष्ठी विधीयते सा सा षष्ठ्येव स्यान्न तु कैश्चिद् ज्ञानादिभिः सुबन्तैः सह तस्याः समास इति ज्ञापयति। तेन सर्पिषो ज्ञानमित्याद्यसमस्तान्युदाहाराणि साधूनि भवन्ति। अतः 'प्रतिपदविधाना षष्ठी न समस्यते' इति वार्तिकमपि फलितम् ॥ १२१ ॥

## कृतपूर्वी कटम्।

अयम्भावः—क्रियाजनकत्वं कारकत्वमिति सिद्धान्तेन "कर्तृकर्मणोः कृति" इति सूत्रे कर्तृकर्मभ्यां कारकाभ्यां क्रियाया आक्षेपो भवति। क्रिया च धातुवाच्या धातोश्च तिङः कृतश्चेति द्विधा प्रत्ययाः, तत्र तिङ्योगे 'न लोक' इति कर्मणि षष्ठ्या निषेधेन कृद्योगे एव कर्मणि षष्ठी भविष्यतीति कृति ग्रहणं व्यर्थमेव। तदेव व्यर्थं सत् यत्र कृदन्तमात्रशक्तिग्रहप्रयोज्यक्रियानिरूपितं कर्मत्वं तत्रैव कर्मणि षष्ठी स्यात्। यत्र तु तद्धितान्तप्रयोज्यक्रियानिरूपितं कर्मत्वं स्यात्तत्र मा भूदिति ज्ञापयति। एवञ्च ओदनस्य पाचक इत्यादौ कृदन्तमात्रप्रयोज्यक्रियानिरूपितं कर्मत्वं विद्यते इति तत्र षष्ठी सिद्ध्यति कृतपूर्वी कटमित्यत्र तु तद्धितान्तप्रयोज्यक्रियानिरूपितं कर्मत्वमिति षष्ठी न भवति। केवलस्य कृतेति पदस्य योगे कर्मण उक्तत्वेन कृदन्तमात्रप्रयोज्यक्रियानिरूपितं कर्मत्वञ्च सम्भवतीति सारांशः ॥ १२२ ॥

## (२) सर्वोऽयंकारक।

अयम्भावः—प्राचीनमते यत्र "कर्तृकर्मणोः कृति" इति षष्ठी प्राप्ता भवति तत्रैव "न लोकाव्यय" इति सूत्रेण षष्ठ्याः प्रतिषेधो भवति। यत्र तु शेषविवक्षया षष्ठी जायते, तत्र निषेधो न भवतीति ब्राह्मणस्य कुर्वन्नित्यादौ षष्ठी सिध्यति।

---

(१) ग्रामाद्बहिरिति। ननु तर्हि कथं 'करस्य करभो बहिः' इत्यत्र षष्ठी इति चेद् "ज्ञापकसिद्धं न सर्वत्र" इति परिभाषया षष्ठ्यपि साधु इति बोधनादिति भावः। (२) सर्वोऽयमिति। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायादिति भावः।

परञ्चैवं सति नपुंसके भावे क्तस्य योगे "षष्ठ्या उपसंख्यानम्" छात्रस्य हसितमिति भाष्योक्तं वार्तिकमसङ्गतं भवति। यतः शेषत्वेन विवक्षिते "षष्ठी शेषे" इति सूत्रेणैव छात्रस्य हसितमित्यत्र षष्ठ्याः सिद्धौ वार्तिकविधानं व्यर्थमेव।

अथ च शेषत्वविवक्षया वार्तिकप्रत्याख्याने तु क्तातिरिक्तविषये शेषत्वविवक्षा न भवतीति ज्ञाप्यते। अन्यथा वार्तिकसत्तायां क्तस्य योगे षष्ठी जायते, प्रत्याख्याने तु सर्वयोगे षष्ठी जायते इति प्रत्याख्यानं सङ्गतं भवतीति नव्याः ॥ १२३ ॥

## यस्मादधिकम्।

अयम्भावः—"ईश्वरवचनम्" इत्यत्रेश्वरशब्दो भावप्रधानः। तथाचेश्वरत्वमुच्यते इति विग्रहः। यस्येति षष्ठ्याश्च निरूपितत्वं निष्ठत्वञ्चार्थः। एवञ्च यन्निरूपितमीश्वरत्वमुच्यते तद्वाचकात्सप्तमी।

अथ च यन्निष्ठमीश्वरत्वमुच्यते, तद्वाचकात्सप्तमीत्यर्थद्वयं जायते। तथा च यन्निरूपितमीश्वरत्वमुच्यते इति व्याख्याने भूशब्दात्सप्तमी सिध्यति। यन्निष्ठमीश्वरत्वमुच्यते इति व्याख्याने तु रामशब्दात्सप्तमी। तथाचाधि(१)भुवि रामः, (२) अधिरामेभूरिति प्रयोगद्वयं सिद्धम् ॥ १२४ ॥ इति विभक्त्यर्थाः।

---

# अथाव्ययीभावः।

## भूतपूर्वः।

(३) अयम्भावः—समासविधायक 'सुप्सुपा" इति शास्त्रे प्रथमया विभक्त्या भूतपूर्वयोर्द्वयोरपि बोधितत्वेन पर्यायतो द्वयोरपि पूर्वनिपातापत्तिरिति "भूतपूर्वे चरट्" इति निर्देशेन भूतशब्दस्य पूर्वनिपातो भवति।

अन्यथा लौकिकोपसर्जनत्वसमानाधिकरणशास्त्रीयोपसर्जनत्वस्य पूर्वशब्दे एव सत्त्वेन तस्यैव पूर्वनिपातः स्यादिति सारांशः ॥ १२५ ॥

## अधिहरि।

अयम्भावः—'अधि' इत्यव्ययस्याधिकरणवाचकत्वेन "उक्तार्थानामप्रयोगः" इति

---

(१) **अधिभुवि राम इति।** अधिः ईश्वरपर्यायः। सम्बन्धः सप्तम्यर्थः। भुवः स्वामी राम इत्यर्थः। **(२) अधिरामे भूरिति।** अत्र अधिशब्दः स्वशब्दपर्यायः। सम्बन्धस्सप्तम्यर्थः। रामस्य स्वभूता भूरित्यर्थः। अत्र स्वामिवाचकात्सप्तमी। (३) पूर्वं भूत इति। विग्रहे "सुपा" इत्यनेन समासे समासत्वात्प्रातिपदिकसंज्ञायाम् "सुपो धातुप्रातिपदिकयोः" इत्यनेन प्रातिपदिकावयवस्य सुपो लुकि सति अनयोः भूतपूर्वशब्दयोर्मध्ये कस्य पूर्वनिपात इति शङ्कायामाह—**अयम्भाव इति।**

न्यायेन ङिविभक्तेरप्राप्तिरिति विभक्त्यर्थसमासविधानसाम(१)र्थ्यादत्र ङिविभक्ति-सिद्धिर्भवति । यस्मिन् विभक्त्यर्थे समासो विवक्षितस्तदर्थवाचकविभक्त्या यत्सुबन्तं तेनैव सहाव्ययस्य समासो भवतीति अन्यसुबन्तेन अव्ययस्य समासो न स्यादिति सारांशः ॥ १२६ ॥

## (२) विभाषा ।

अयम्भावः—"विभाषा" इति सूत्रारम्भसामर्थ्येन यथा "विभाषा" इति सूत्रात् पूर्वेषां समासानां नित्यसमासत्वम्भवति तथैव "सुप् सुपा" इति विहितसमासस्यापि नित्यसमासत्वं न शंक्यम् । "सुप् सुपा" इति सूत्रेणैव समासे सिद्धे "अव्ययम्" इत्यादिभिः पुनः समासविधानात् ।

ननु "अव्ययम्" इत्यादिना समासविधानं "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रेणाव्ययस्योपसर्जनसंज्ञाविधानार्थं सफलमिति वाच्यम् । यथा "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रे समासे इति पदस्य लक्षणया समासविधायके शास्त्रे "प्रथमानिर्दिष्टम्" इत्याद्यर्थेनाव्ययस्योपसर्जनसंज्ञासिद्धेः । "सुप्सुपा" इति विहितसमासस्य "अव्ययम्" इत्यादिनाऽव्ययीभावसञ्ज्ञाविधानेनैवोपसर्जनसञ्ज्ञासिद्धौ "अव्ययम्" इत्यादिना समासविधानं व्यर्थमेवेति सारांशः ॥ १२७ ॥

इत्यव्ययीभावः ।

# अथ तत्पुरुषः ।

## (३) प्राप्तजीविका ।

जीविकां प्राप्ता या स्त्री सा प्राप्तजीविका, अत्र "प्राप्तापन्ने च द्वितीयया" इति सूत्रेण समासे प्राप्तापदस्य दीर्घाकारस्य ह्रस्वाकारे च कृते प्रयोगः सिध्यति । अन्य

(१) सामर्थ्यादिति । वचनसामर्थ्यादिति तस्यार्थः । सुपेत्यनुवर्त्य सुबन्तेनात्र समासविधिसामर्थ्यात् सप्तमी स्यादेवेति भावः । न च "अनभिहिते" इति सूत्रे भाष्ये 'तिङ्कृत्तद्धित' इति परिगणनादधिनोक्तत्वेऽपि सप्तमी न स्यादेवेति वचनसामर्थ्यात्सप्तमीकल्पनमयुक्तमिति वाच्यम् । तस्य भाष्ये प्रत्याख्यातत्वात् । (२) "विभाषा" इति । ननु एकार्थीभावे समासस्य व्यपेक्षायां वाक्यस्य च सिद्धौ 'विभाषा' इति व्यर्थमिति चेत्, न । लक्षणैकचक्षुष्कान्प्रति क्व एकार्थीभावो नित्यः, क्व पाक्षिकः, क्व न भवति इति बोधनार्थं तस्यावश्यकत्वात् । (३) प्राप्तजीविकेति । जीविकां प्राप्ता इति विग्रहे प्राप्तजीविकः "प्राप्तापन्ने च द्वितीयया" अत्रत्यस्य चकारस्य समुच्चयार्थत्वात् । "द्वितीयाश्रिता" इत्यनेन पक्षे जीविकाप्राप्तः इत्यपि भवतीति बोध्यम् ।

था कर्मधारयसमासाभावेन "पुंवत्कर्मधारय" इति सूत्राप्रवृत्त्या प्राप्तपदे ह्रस्वाकारो दुर्लभ इति सूत्रे (१)ऽकारोऽपि प्रश्लिष्टः ॥ १२८ ॥

## व्याघ्री ।

अयम्भावः—"उपपदमतिङ्" इति सूत्रे "सुबामन्त्रिते पराङ्गवत्स्वरे" इति सूत्रात्सुबिति प्रथमान्तपदं "सह सुपा" इति सूत्रात् सुपेति तृतीयान्तञ्च पदमनुवर्तते। ततश्चोपपदं सुबन्तं सुबन्तेन सह समाससंज्ञकं भवति इत्यर्थे तिङन्तेन सह समासे निषिद्धेऽतिङ्ग्रहणं व्यर्थं सत् सुपेति तृतीयान्तं पदं नानुवर्तते इति ज्ञापयति ।

एवञ्च "कुगतिप्रादयः" इति सूत्रे गतिग्रहणं पृथक्कृत्य तत्रातिङ्ग्रहणस्यापकर्षणेन गतिसंज्ञकोऽतिङन्तेन सह समाससंज्ञको भवतीत्यर्थेन तत्रापि सुपेति तृतीयान्तपदस्य नानुवृत्तिः ।

इत्थञ्च "गतिकारकोपपदानाम्" इत्यादि परिभाषा सिद्धा भवति । फलञ्च व्याघ्रीत्यादौ ङीप्सिद्धिः ।

अन्यथा गतीत्यादीनां सुबन्तेन समासे तु व्याघ्री(२) इत्यादौ स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमश उपस्थित्या सुपः प्राक्लिङ्गबोधकटापः प्रवृत्तौ व्याघ्री इत्यस्य जातित्वाभावेनादन्तत्वाभावेन च "जातेरस्त्री" इति सूत्रेण ङीषः प्रवृत्तिर्न स्यात् ॥ १२९ ॥

## दीर्घाह्नी ।

दीर्घाणि अहानि यस्यामिति विग्रहे बहुव्रीहिसमासे "ऋन्नेभ्यो ङीप्" इति ङीपि "अल्लोपोऽनः" इति अकारलोपे "क्षुभ्नादिषु च" इति णत्वनिषेधे दीर्घाह्नी

---

(१) **अकारोऽपीति** । "प्राप्तापन्ने च द्वितीयया" अत्र अकारः प्रश्लेष्टव्यः, स च प्राप्ता आपन्ना अनयोरन्ते विधेय इति भावः । (२) **व्याघ्रीत्यादाविति** । आदिपदेन अश्वक्रीती कच्छपी ज्ञेया । तथाहि—व्याजिघ्रतीति व्याघ्री "आतश्चोपसर्गे" इति कः आङो घ्रशब्देन उपपदसमासः । स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत, तर्हि सुबुत्पत्तये सङ्ख्याद्यपेक्ष्य ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तेन टापा भाव्यम् । न तु ङीषः । घ्रमात्रस्य जातित्वाभावात् । ततो घ्राशब्देन समासे अदन्तत्वाद्भावाज्जातिलक्षणो ङीषा न स्यादिति भावः । कारकस्योदाहरणम्—'अश्वक्रीती' इति । अश्वेन क्रीता "कर्तृकरणे कृता बहुलम्" इति समासे "क्रीतात्करणपूर्वात्" इति ङीष् । सुबन्तेन समासे तु पूर्वोक्तदिशा टापा भाव्यं तदन्तरमदन्तत्वाभावात् "क्रीतात्करणपूर्वात्" इति ङीष् न स्यादिति भावः । **कच्छपीति** । कच्छेन पिबतीति कच्छपी । अत्र "सुपि" इति योगविभागात्कः । इहापि समासस्य सुबन्ततापेक्षायां टाबेव स्यान्न तु ङीष् । ततः समासे अदन्तत्वाभावान्न ङीष् इति ज्ञेयम् । केचित्तु—व्याघ्री इति गतिसमासस्योदाहरणमाह तदपि युक्तमेव ।

पदं सिद्धयति । नचात्र "अह्नोऽदन्तात्" इति सूत्रेऽह्न इति पदमदन्ताहन् शब्दस्यानुकरणम् । ततश्च यत्राहन् शब्दोऽदन्तः स्यात्तत्रैव "अह्नोऽदन्तात्" इति सूत्रेण णत्वं स्यात् । एवञ्च दीर्घाह्नीत्यत्रादन्तत्वाभावेन णत्वाप्राप्त्या 'क्षुभ्नादिषु' दीर्घाह्नीशब्दपाठो निष्फल इति वाच्यम् । "अह्नोऽदन्तात्" इति सूत्राप्रवृत्तावपि "प्रातिपदिकान्त" इति सूत्रेण प्राप्तस्य णत्वस्य वारणार्थं क्षुभ्नादिषु दीर्घाह्नीशब्दपाठ(१)स्यावश्यकत्वात् ॥ १३० ॥

## (२) अष्टागवम् ।

अष्टौ गावो यत्रेति विग्रहे बहुव्रीहिसमासे "अच्प्रत्यन्वव" इति सूत्रेऽजिति योगविभागेनचाच्प्रत्यये "गवि च युक्ते" इत्यात्वे अष्टागवमिति रूपं सिध्यति । अष्टानां गवां समाहारोऽष्टगवम् । अष्टगवमस्त्यस्मिन्निति विग्रहे "अर्श आदिभ्योऽच्" इति अच् प्रत्यये कृते युक्तार्थो गम्यते । ततश्च "गवि च युक्ते" इत्यात्वे अष्टागवमिति सिध्यति । इत्थञ्च अष्टागवमिति पदस्य द्विधा साधनप्रकार इति सारांशः ॥१३१॥

इति तत्पुरुषः ।

# अथ बहुव्रीहिः ।

## कल्याणीपञ्चमाः ।

कल्याणी पञ्चमी यासां रात्रीणामिति विग्रहे (३)उद्भूतावयवभेदविवक्षया पञ्चमीशब्दः प्रधानम् । पूरणप्रत्ययान्तश्चेति "अप्पूरणीप्रियादिषु" इति पुंवद्भावप्रतिषेधे "अप्पूरणीप्रमाण्योः" इत्यपि ईकारलोपे च प्रयोगः सिध्यति । कल्याणपञ्चमीकपक्षे तु तिरोहितावयवभेदविवक्षया पञ्चमीपदार्थः प्रधानं न भवतीति पुंवद्भावप्रतिषेधोऽप्रत्ययश्च न भवति । उद्भूतावयवभेदविवक्षायां समासघटकतया यावन्ति पदानि सन्ति तेषां सर्वेषामर्थः प्रधानं भवति । तिरोहितावयवभेदविवक्षायान्तु समासघटकपदानामर्थः प्रधानं न भवति; किन्तु अन्यपदार्थ एव प्रधानं भवतीति सारांशः ॥ १३२ ॥

---

(१) **पाठस्यावश्यकत्वेति** । अयम्भावः—"प्रातिपदिकान्तनुम्विभक्तिषु च" इति णत्ववारणार्थमावश्यकं क्षुभ्नादिगणे पाठः। एवञ्च "अह्नोऽदन्तात्" इत्यनेन प्राप्तमपि णत्वं क्षुभ्नादित्वान्न भविष्यतीति तदर्थम् अदन्तानुकरणक्लेशो न कर्तव्य इति भावः। (२) नन्वत्र समाहारे कृते टचो लाभः स्यात्परञ्च युक्तार्थस्य लाभो न स्यात् । बहुव्रीहौ तु युक्तार्थो लब्धः स्यात्परं टचोऽभावः स्यादित्याशयेनाह—**अष्टागवमिति** । (३) **उद्भूतावयवेति** । उद्भूतावयवभेदस्य रात्रिसमूहस्य प्रधानत्वेन यथा प्रथमाद्या रात्रयः समासाभिधेयः, एवं पञ्चम्यपीति वतिपदार्थस्यान्यपदार्थेऽनुप्रवेशात्प्राधान्यमिति भावः ।

## सपत्नीशब्दः ।

अयम्भावः—सपत्नीशब्दः प्रकारत्रयेण सिध्यति। तथापि शत्रुवाचकसपत्नशब्दात् शार्ङ्गरवादित्वाद् ङीनि सत्येकः। समानः पतिर्यस्या इति विग्रहे "नित्यं सपत्न्यादिषु इति नकारे ङीपि च कृते नित्यस्त्रीलिङ्गो द्वितीयः। समानः पतिर्नाम रक्षको यस्या इति विग्रहे भाषितपुंस्कस्तृतीयः।

तथा च—शिवादिगणे प्रथमाद्वितीययोर्स्त्रीलिङ्गशब्दयोरेव ग्रहणेनाणूप्रत्यये सापत्नः इति रूपं सिध्यति। भाषितपुंस्कात्सपत्नीशब्दात्तु "दित्याद्वित्य" इति ण्यप्रत्यये "भस्याढे तद्धिते" इति पुंवद्भावे इकारलोपे च कृते सापत्य इति रूपं सिध्यति।

यदा कस्यचित्प्रभोः स्त्रीपुरुषौ द्वावपि किङ्करौ स्तः; तदा सपतिशब्दः स्त्रीपुरुषयोर्द्वयोरपि वाचक इति भाषितपुंस्कत्वं तस्येति सारांशः ॥ १२३ ॥ इति बहुव्रीहिः।

---

## अथ द्वन्द्वः ।

### (१) विप्रतिषिद्धं किम् ।

अयम्भावः—नन्दकश्च पाञ्चजन्यश्चेति विग्रहे इतरेतरयोगे सति नन्दकपाञ्चजन्यौ इति रूपं भवति। पाक्षिकसमाहारे सति नन्दकपाञ्चजन्यमिति रूपम्भवति। तथा च रूपद्वयसिद्धिः। विप्रतिषिद्धग्रहणस्य फलं यदि विरुद्धार्थाः शब्दाः स्युस्तदा गुणवाचकानां शब्दानामेव पाक्षिकसमाहारद्वन्द्वो भवति। द्रव्यवाचकानान्तु इतरेतरयोग एव भवति। 'शीतोष्णे उदके स्तः, अत्रोदकशब्दस्य द्रव्यवाचकत्वेनेतरेतरयोग एव भवति। अथ च यदि विरुद्धार्थाः शब्दा न स्युस्तदा द्रव्यवाचकानामपि शब्दानां पाक्षिकसमाहारद्वन्द्वो भवति। एवञ्च नन्दकपाञ्चजन्ययोर्विरोधाभावेनेतरेतरयोगः समाहारश्चेत्युभयमपि भवतीति सारांशः ॥ १२४ ॥ इति द्वन्द्वः।

---

## अथ समासाश्रयः ।

### हल्लेखः ।

अयम्भावः—अणूप्रत्ययेन प्रत्ययग्रहणे यस्मात्स विहित इत्यादिपरिभाषया प्रत्ययान्ततदादीत्यंशोपस्थितौ केवलप्रत्ययस्थले व्यपदेशिवद्भावेन अणूप्रत्ययान्ततदादित्वं लेखशब्दे चाणूप्रत्ययान्तत्वं वर्तत एवेति स्थलद्वये हृदादेशे सिद्धे लेखग्रहणं व्यर्थं सत् "उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ति" इति परिभाषां ज्ञापयति।

---

(१) विप्रतिषिद्धमिति। विप्रतिषेधो विरोधः सहानवस्थानलक्षणः। अधिकरणं द्रव्यम अद्रव्यवाचि विरुद्धार्थकं च यदनेकं सुबन्तं तदवयवको द्वन्द्वः विभाषैकवद्भावक इत्यर्थः।

लेखेतिपदं घञन्तलेखशब्दबोधनार्थमिति न शंक्यम् । अणप्र(१)त्ययसाहचर्येणाणन्त-लेखस्यैव ग्रहणात् ॥ १३५ ॥

## गर्गभगिनी ।

अयम्भावः—"प्रातिपदिकान्त" इति पदस्योत्तरपदं यत् प्रातिपदिकं तस्यान्ताव-यवो यो नकारस्तस्य णत्वं भवतीत्यर्थो भवति । तथा च गर्गभगिनीति समासस्थले उत्तरपदं प्रातिपदिकं भगिनी इति तस्यान्तावयव ईकारो न तु नकार इति तत्र णत्वं न भवति । इत्थञ्च नुम् ग्रहणमपि सफलं भवति । अन्यथा प्रातिपदिकस्यान्तावयवो यो नकारस्तस्य णत्वं स्यादिति सामान्यार्थे तु व्रीहिवापाणीति प्रयोगे व्रीहिवापेति प्रातिपदिकस्यान्तावयवो नकारोऽस्त्येवेति प्रातिपदिकान्तेत्यंशेनैव णत्वसिद्धौ नुमो निष्फलत्वं स्पष्टमेव । उत्तरपदं यदित्याद्यर्थे तु व्रीहिवापेति समुदायस्यान्तावयवो नुम् भवति, न तु वापेति उत्तरपदस्यान्तावयव इति तदर्थं नुम् ग्रहणं कर्तव्यम् ॥ १३६ ॥

इति समासाश्रयः ।

# अथ तद्धितेष्वपत्याधिकारः ।

## (२)आदिवृद्धिः ।

अयम्भावः—एकलक्ष्ये एककालावच्छेदेन कार्यद्वयस्यासम्भवरूपं विप्रतिषेधसूत्र-प्रवृत्तौ निमित्तं तच्चात्र नास्ति, यतः एकलक्ष्ये आदिवृद्धौ अन्त्यवृद्धौ च सत्यां नहि कश्चिद् विरोधः । एवमेकत्र लक्ष्ये आदिवृद्धौ उपधावृद्धौ च सत्यां नास्ति विरोध इति विप्रतिषेधसूत्राप्रवृत्तौ परत्वमूलकबाधो न सम्भवति । एवमादिवृद्धौ सत्यामन्त्योपधावृद्ध्योः सत्योः आदिवृद्धेश्च प्रसङ्ग इति नित्यत्वमूलकोऽपि बाधो न । अथ च सर्ववृद्धीनां प्रकृतिप्रत्ययोभयसापेक्षत्वेनान्तरङ्गत्वमूलकबाधासम्भवः । अन्यत्र वृद्धित्रयस्य साफल्येनापवादमूलकबाधासम्भवश्चेति किम्मूलिकाऽदि-वृद्धिर्बाधिकेति सन्देहे अनुशतकादिगणे पुष्करसच्छब्दस्य पाठो बाधकत्वे मूलम्, अन्यथा "तद्धितेष्वचादिः" इति सूत्रेणादिवृद्धौ "अत उपधाया" इत्यनेनोपधावृद्धौ च सत्यां पौष्करसादिशब्दस्य सिद्धौ तद्गणे पुष्करसच्छब्दपाठ उभयपदवृद्ध्यर्थो निष्फल एव ॥ १३७ ॥

---

( १ ) अणप्रत्ययसाहचर्येणेति । 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषयेति भावः । ( २ ) ननु उपगु अ इति स्थितौ गुणादेशस्य पित्र्यादौ सावकाशत्वात् "ओर्गुणः" इत्येतं बाधित्वा परत्वात् "अचो ञ्णिति" इति वृद्धिप्रसङ्गः । गुणे च कृतेऽवादेशे च "अत उपधायाः" इति वृद्धिप्रसङ्गश्च स्यादित्यत आह— आदिवृद्धिरिति ।

## तस्येदमिति ।

अयम्भावः-( १ ) "तस्येदम्" इति सूत्रेण औपगवादिप्रयोगेऽणः सिद्धौ "तस्यापत्यम्" इति सूत्रं व्यर्थमेव । न च "अत इञ्" सूत्रेऽपत्यपदानुवृत्त्यर्थं सूत्रं सफलमिति वाच्यम् । "तस्यापत्यमत इञ्" इत्येकयोगे कर्तव्ये योगविभागस्य व्यर्थत्वात् । स एव योगविभागो व्यर्थः सन् भानवादिप्रयोगे "तस्येदम्" इत्यस्य बाधकं यत् "वृद्धाच्छः" इति सूत्रं तद्बाधनार्थो भवति । "तस्येदं" "वृद्धाच्छः" इति सूत्रद्वयस्य अपत्यादिव्यतिरिक्तार्थे एव प्रवृत्तिरिति सूत्रद्वयस्यापत्यार्थे प्रवृत्तिरेव न भविष्यतीति न शङ्क्यम् । यावत् "तस्यापत्यमत इञ्" इत्येकयोगो वर्तते तावददन्तशब्दसम्बद्धापत्यरूपार्थस्योपयुक्तत्वेऽपि अन्यशब्दसम्बद्धापत्यार्थस्य शेषत्वात्, उपयुक्तादन्यः शेष इति लक्षणात् । सति योगविभागे सर्वशब्दसम्बद्धापत्यरूपार्थस्योक्तत्वेन शेषत्वाभावात् । "तस्येदम्" "वृद्धाच्छः" इति सूत्रद्वयं स्वत एव न प्रवर्तते इति सारांशः ॥ १३८ ॥

## (२)कृतसन्धेः ।

"समर्थानां प्रथमाद्वा" इति सूत्रे समर्थपदेन परिनिष्ठितस्य ( ३ ) ग्रहणात् सुस्थितस्यापत्यमिति विग्रहे सु उत्थित इति पदद्वयेन सह सन्धौ इञ्प्रत्यये च कृते सौस्थितिरिति रूपं सिध्यति। अन्यथा विनाशोन्मुखेन सुघटकोकारेण सह दीर्घाभावात्सुघटकोकारस्य वृद्धौ सावुत्थितिरित्यनिष्टं स्यात् ॥ १३९ ॥

## प्रथमात् किम् ।

"समर्थानां प्रथमाद्वा" इति सूत्रतोऽधिकृतस्य प्रथमादिति पदस्य प्रत्ययविधायकसूत्रेषु प्रथमोच्चारितात्सुबन्तादपत्याद्यर्थेषु प्रत्ययाः स्युरित्यर्थो भवति । तथा च उपगोरपत्यमिति विग्रहे प्रत्ययविधायके "तस्यापत्यम्" इति सूत्रे तस्येति षष्ठ्यन्तं पदं प्रथमोच्चारितमिति षष्ठ्यन्तादेव उपगुशब्दात्प्रत्ययो भवति । एवञ्चोपगुरपत्यमस्येति विग्रहे प्रथमान्तादुपगुशब्दात्प्रत्ययो न भवतीति फलं सिद्धम् ॥ १४० ॥

## एको गोत्रे ।

अयम्भावः—उपगोर्गोत्रापत्यमिति विग्रहे "तस्यापत्यम्" इति सूत्रेणाणप्रत्यये

---

( १ ) ननु अपत्यसमूहविकारादीनामिदमर्थेऽन्तर्भावाद् "तस्येदम्" इत्यनेनैवाणः सिद्धौ किमर्थं "तस्यापत्यम्" इत्याशयम्प्रकटयति—"तस्येदम्" इत्यादिना । ( २ ) ननु अन्तरङ्गत्वात् सन्धौ कृत एव प्रत्ययोत्पत्तिरिति "समर्थानां प्रथमाद्वा" इति सूत्रे समर्थग्रहणं व्यर्थमित्याशयेनाह—**कृतसन्धेरिति** । ( ३ ) **परिनिष्ठितस्येति** । समर्थशब्दः शक्तपर्यायः, शक्तत्वञ्च—अर्थप्रतिपादकत्वम् । तच्च परिनिष्ठितस्यैव सम्भवतीति भावः ।

औपगवादिप्रयोगसिद्धौ "एको गोत्रे" इति सूत्रं (१) गोत्राधिकारे एक एवापत्यार्थकप्रत्ययः स्यादिति नियमयति।

इत्थञ्च—आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ॥ १ ॥

इति कोशप्रामाण्येन 'पौत्रं लालयतः पितामहस्योत्सङ्ग बालकं दृष्ट्वा अयं बालकः कस्यापत्यमिति कश्चित् पृच्छति। अयं बालको मदीयपुत्रस्यापत्यमिति पितामह उत्तरं ददातीति लोकयुक्त्या च "अपत्यं पितुरेव स्यात्" इति पक्षे, उपगुशब्दादण्प्रत्यये पौत्रादिरूपेष्टार्थस्यासिद्धया पौत्रार्थस्य वाचकः कश्चित्प्रत्ययो वक्तव्यः। एवं प्रपौत्ररूपार्थस्यापि वाचकः कश्चित्प्रत्ययो वक्तव्यः। एवञ्चोपगुशब्दात् शततमेऽपत्यत्वेन विवक्षिते एकोनशतानिष्टप्रत्ययानां वारणं भवतीति फलम्। "अपत्यं पौत्रप्रभृतिगोत्रम्" इति सूत्रस्वारस्येन न पतन्ति पितरो नरके येन तदपत्यमिति व्युत्पत्या अपत्यशब्देन सर्वे पुत्रपौत्रादयो गृह्यन्ते इति अपत्यशब्देन पितुः सम्बन्धः स्यात्। पितामहादीनामपि सम्बन्धो भवतीति मुख्यपक्षे उपगुशब्दादण्प्रत्यये पौत्रादिरूपेष्टार्थस्य सिद्धावपि तृतीये वाच्ये इञ् स्यात्। चतुर्थे वाच्ये फगिति रीत्या शततमेऽपत्यत्वेन विवक्षिते उपगुशब्दादण् प्रत्यये औपगवशब्दः शततमापत्यार्थस्य वाचकः। उपगुशब्दश्च मूलप्रकृतिरिति प्रकृतिद्वयमिष्टं मध्ये च इञादिघटिताष्टनवत्यनिष्टप्रकृतयो न भवन्तीति फलम्। उपगोस्तृतीयं यद्यपत्यत्वेन विवक्षितं तदा उपगोरपत्यमिति विग्रहे औपगवशब्दः उपगोः पौत्रस्य वाचकः। अथ च यदि द्वितीयमपत्यत्वेन विवक्षितम्, तदा औपवगवशब्दः उपगोः पुत्रस्य वाचकः। एवं रीत्या एक एवौपगवशब्दः सर्वेषामपत्यानां वाचक इति मुख्यपक्षेऽन्यप्रत्ययानां प्रयोजनं नास्ति। परञ्च औपगवशब्दो यदि पौत्रस्य वाचकस्तदा उपगोरपत्यं भवति उपगुपुत्रस्याप्यपत्यं भवति। एवञ्च औपगवस्यापत्यमिति विग्रहे औपगवशब्दादिञपि स्यात्। तथाच इञ्घटितप्रयोगः स्यात् औपगवशब्दप्रयोगश्च स्यादितीञादिघटितप्रकृतीनां प्रयोगो माभूदिति सारांशः ॥ १४१ ॥

## एको गोत्रे

उपगोर्गोत्रापत्यमिति विग्रहे "तस्यापत्यम्" इति सूत्रेणाण्प्रत्यये औपगवप्रयोगस्य सिद्धौ "एको गोत्रे" इदं सूत्रं गोत्राधिकारे एक एवापत्यार्थकप्रत्ययः स्यादिति नियमयति। इत्थञ्चापत्यं पितुरेव भवतीति पक्षे, एकोनशतानिष्टप्रत्ययानां वारणं भवतीति फलम्। न पतन्ति पितरो नरके येन तदपत्यमिति भाष्यसिद्धान्तपक्षे पुत्र-

---

(१) ननु एकस्मिन् गोत्रे युगपद् अनेकप्रत्ययानाम्प्रसक्तेरित्याशङ्क्य सूत्रारम्भफलं प्रदर्शयति—**गोत्राधिकारे** इति।

पौत्रादयः सर्वेऽपत्यशब्देन गृह्यन्ते इत्यपत्यं पितुर्भवति, पितामहादीनामपि भवतीत्यण्प्रत्ययेनेष्टगोत्ररूपार्थे सिद्धेऽपि उपगुशब्दाच्छततम अपत्यार्थेऽभिधातुमिष्टे सति अष्टनवत्यनिष्टप्रत्ययानां निरोधो भवतीति फलम्। (१)प्रथमपक्षे इष्टसिद्धिर्नियमश्चेति कार्यद्वयं सूत्रस्य फलम्। सिद्धान्तपक्षे तु केवलनियमसिद्धिरिति सारांशः ॥१४२॥

## क्षत्रियसमानशब्दात्।

तेषां राजा तद्राजस्तद्राजमाचष्टे तद्राजयति तद्राजयतीति तद्राजस्तत्तद्देशस्य राज्ञो वाचकः इत्यन्वर्थतद्राज इति सञ्ज्ञासामर्थ्येन यो हि शब्दो देशस्य वाचकः क्षत्रियरूपार्थस्य च वाचकस्तस्मात् शब्दात्, तस्य नाम षष्ठ्यन्तात् समर्थात् अपत्येऽर्थे यथा प्रत्यया भवन्ति, तथा राजन्यप्यर्थे प्रत्ययाः स्युः। एवञ्च पञ्चालानां राजा पञ्चालस्यापत्यं वेत्यर्थद्वयेऽपि पाञ्चाल इति रूपं सिद्ध्यति ॥१४३॥ इति तद्धितेष्वपत्याधिकारः।

# अथ चातुरार्थिकम्।

## (२)सिद्धे यस्येति।

अयं भावः—"वामदेवाड्ड्यड्ड्यौ" इति सूत्रेण ययतोः प्रत्यययोः कृतयोः सतोः "यस्य" इति सूत्रेणाकारलोपे वामदेव्यमिति प्रयोगे सिद्धे प्रत्ययद्वये डकारोपादानं (३)निरनुबन्धकग्रहणे न सानुबन्धकग्रहणम्" इति "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" इति च परिभाषाद्वयं ज्ञापयति। इत्थञ्च "ययतोश्चातदर्थे" इति सूत्रे ययदिति-प्रत्ययद्वयेन ड्यत्ड्ड्येतिप्रत्ययद्वयस्य ग्रहणाभावेन अवामदेव्यमितिप्रयोगे उदात्तस्वराभावः सिध्यतीति फलम् ॥ १४४ ॥ इति चातुरार्थिकम्।

# अथ द्विरुक्तप्रक्रिया।

## एकैकस्मै।

"विभाषा दिक्समासे बहुव्रीहौ" इत्यतो बहुव्रीहिग्रहणेऽनुवर्त्तमाने "न बहुव्रीहौ" इत्यत्र पुनर्बहुव्रीहिग्रहणं यत्र मुख्यबहुव्रीहिसमासश्चिकीर्षितो भवति तत्रैव सर्वनामसंज्ञा न स्यादिति निषेधति। एवञ्चात्र "एकं बहुव्रीहिवत्" इति सूत्रेण बहुव्रीहिसमासे यत् कार्य्यम्भवति तत् कार्य्यमत्रापि स्यादिति आरोपयति। तेनात्र बहुव्रीहि-

---

( १ ) **प्रथमपक्षे इति**। प्रथमपक्षे प्रत्ययमालाव्यावृत्तिः। द्वितीयपक्षे सद्यूनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तिरिति भावः। ( २ ) परिभाषाद्वयसिद्धमर्थमाह—**सिद्धे यस्येत्यादिना**।
( ३ ) **निरनुबन्धेति**। "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इत्यत्र तव्यग्रहणेन तव्यतो ग्रहणं न इति "निरनुबन्धक" इति परिभाषायाः फलम्बोध्यम्। एवं द्वितीयपरिभाषायाः अञो चञो ग्रहणं नेति।

समासाभावात् सर्वनामसंज्ञायामुक्तप्रयोगसिद्धिः । सूत्रप्रत्याख्याने सर्वनामसंज्ञायां विवाद एव नास्ति । सूत्रसत्तायामपि 'एक बहुव्रीहिवत्" इति सूत्रेण (१) बहुव्रीहिसमासारोपो भवति, न तु बहुव्रीहिसमासो भवतीति सन्देहाभाव इति सारांशः ॥१४४॥

## (२) दलद्वय ।

स्त्रीलिङ्गे पदद्वये टाबभावो भवति । नपुंसकलिङ्गे च स्वमोः स्थानेऽद्ड्डादेशस्य विरहोऽभावो भवति । अन्यपदैः सहान्यादिशब्दानां समासे सति सोः सुविभक्तेरलुक् च भवतीत्येतत् कार्यत्रयं, बाहुलकात् बहुलग्रहणात् सिद्धं भवति । स्त्रीलिङ्गेऽन्योऽन्यमित्यादौ पदद्वये टाप् भवति । नपुंसकलिंगेऽन्योऽन्यमित्यादौ अद्ड्डादेशो न भवति । अन्योऽन्यसंसक्तमित्यादिसमासस्थले पूर्वपदघटकसोर्लुक् च न भवति । 'अन्योऽन्यसंश्रयं त्वेतत्' इति भाष्यमुक्तव्याख्याने प्रमाणम् । इति द्विरुक्तप्रक्रिया ॥ १४५ ॥

---

# अथ भ्वादयः ।

## लकाराः प्रदर्श्यन्ते ।

(३) ननु छात्राः दश लकारान् पश्यन्ति पाणिनिः प्रेरयति इति दशायां "दृशेश्च" इति वचनेन प्रयोज्यकर्तुः कर्मसंज्ञायां कर्मद्वये सति 'प्रयोज्यक(४)र्मण्यन्येषाम्'इति नियमेन छात्ररूपकर्मणि लकारे पाणिनिना छात्रा दश लकारान् दर्श्यन्ते इत्येव भवितुमर्हतीति चेन्न । "अभिवादिदृशोरात्मनेपदे वेति वाच्यम्" इति वार्तिकेन प्रयोज्यकर्तुः विकल्पेन कर्मसंज्ञा भवति । यत्र पक्षे कर्मसंज्ञा न भवति, तत्र पक्षे प्रयोज्यकर्तरि तृतीया । मुख्यकर्मणि लकारे छात्रैर्दश लकाराः प्रदर्श्यन्ते इति प्रयोगस्य साधूपपन्नत्वात् ॥ १४६ ॥

## "हलादिः शेषः" ।

अयम्भावः—अभ्यासस्यादिर्हल् शिष्यतेऽन्ये हलो लुप्यन्ते इति सूत्रार्थे पपाचेत्यादौ अभ्यासस्यादिर्हल् वर्तते तत्रान्यहलो लोपो भवति । आट आटतुरित्यादौ तु अभ्यासस्याद्यचरो हल् नास्ति तत्र कथं हल्लोपः, तदर्थं यत्नः कर्तव्यः । कोऽसौ यत्नः "ह्रस्वोऽहलादिः शेष" इति संहितापाठे, अभ्यासस्य ह्रस्वो भवतु । ततोऽभ्यासोऽहल् भवतु हल्रहितो भवतु ततोऽभ्यासस्यादिः शिष्यत्, अभ्यासस्याद्यचरो

---

(१) बहुव्रीहिसमासारोप इति । तेन सुब्लोपपुंवद्भावौ सिध्यतः इति भावः । (२) दलद्वय इति । स्त्रीलिङ्गेषु अन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्डयोरितिभावः। (३) 'दश लकाराः प्रदर्श्यन्ते इति भट्टोजीदीक्षितप्रयोगं साधयति—नन्वित्यादिना । (४) प्रयोज्यकर्मण्येति । 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् । बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया । प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।

वर्तता नाम इति वाक्यार्थत्रयेणाजादिधातुष्वपि अभ्यासोऽहल् भवतु इति वाक्यार्थेन न काप्यनुपपत्तिः।

## 'येन नाव्यवधानम्'

अयम्भावः—कौमुदीकारो गुणवृद्धिविधायकशास्त्रे "इको गुणवृद्धी" इति परिभाषया इक्पदोपस्थितया "सार्वधातुकार्धधातुकयोः"(१)इक् पदार्थे पुगन्तलघूपधयोश्चाङ्गेऽन्वयं कृत्वा "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति परिभाषाबललब्धाव्यवहितांशोपस्थानात्पुगन्तं लघूपधञ्च यदङ्गं तदवयवो यः सार्वधातुकार्धधातुकाव्यवहित इक् तस्य गुणः स्यादित्यर्थे सर्वत्रैव सार्वधातुकार्धधातुकविषये, अर्धमात्रिकव्यञ्जनस्य व्यवधानेन कुत्रापि स्थले "पुगन्तलघूपधस्य च" इति सूत्रप्रवृत्तिर्न स्यादिति तत्सामर्थ्येन "येन नाव्यवधानं तेन व्यवहितेऽपि सूत्रं प्रवर्तते" इति वचनमवतारयति। तेन भिनत्तीत्यत्र गुणाभावः फलं सिद्धम्।

भाष्यकृता तु लघ्वी चासौ उपधा चेति कर्मधारयसमासं कृत्वा पुगन्तलघूपधयोरिक्पदार्थे "सार्वधातुकार्धधातुकयोः" अङ्गपदार्थे उत्थिताकांक्षतया, तयोश्चाङ्गपदार्थेऽन्वयं विधाय सार्वधातुकार्धधातुकाव्यवहितं यदङ्गं तदवयवो यः पुगन्तलघूपधरूपः इक् तस्य गुणः स्यादिति सूत्रार्थे विधात्र भवित् आ इत्यत्र सार्वधातुकाव्यवहितलघूपधरूपेकः सत्वाद् गुणप्राप्तिः। भिनत्तीत्यादौ च सार्वधातुकाव्यवहिताङ्गावयवलघूपधरूपेकोऽभावान्नास्ति गुणप्रवृत्तिरिति "येन नाव्यवधानम्" इति वचनं प्रत्याख्यातमेव। भिनत्तीत्यादौ सार्वधातुकाव्यवहिताङ्गावयवो यो लघूपधरूपोऽकारः स इग् नास्ति, यश्च तादृशः इक् स लघूपधरूपो नास्तीति सारांशः।

## भवतात्।

ननु "ङिच्च" इति सूत्रम् "अनेकाल्शित्सर्वस्य" इति सूत्रस्यापवादो वर्तते। तथाचात्रान्त्यस्यैवादेशः स्यादिति चेन्न। "अनङ् सौ" इत्यादाविव यत्र ङिद्ग्रहणं केवलमन्त्यादेशार्थमेवाचार्येण पठितं तत्रैव "ङिच्च" इति सूत्रमपवादो भवति। अत्र तु ङकारोपादानस्य स्तात् युतात् इत्यादौ गुणनिषेधः, उष्टात् इत्यादौ च सम्प्रसारणमित्यादिफलं वर्तते, इति ङित्वदर्शनेन मन्दं प्रवृत्तस्य "ङिच्च" इति सूत्रस्य परेण "अनेकाल्शित्सर्वस्य" इत्यनेन बाधात्।

यद्यपि उत्सर्गापवादविषये परत्वमूलकं बाधकं न हि दृष्टम्, तथाप्यत्रोत्सर्गापवादयोरपि समबलत्वम्।

---

(१) इक्पदार्थेति। सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वविशिष्टपुगन्तलघूपधावयवो य इक् तस्य गुणो भवतीति दीक्षितमतेऽर्थः।

## ङित्त्वोक्तेः ।

अयम्भावः—"न ल्यपि" इति सूत्रेणाऽनुबन्धकार्ये कर्त्तव्ये "अनल्विधौ" इति निषेधो न प्रवर्तते इति ज्ञापितेन स्थानिवद्भावात् (१)लिङ्वृत्तिङित्त्वधर्मस्यानयनेन ङित्त्वप्रयुक्ते कार्ये सिद्धे "यासुड" इत्यादि सूत्रे ङिद्ग्रहणं व्यर्थमेव। तदेव व्यर्थं सत् 'क्वचिदनुबन्धकार्येऽप्यनल्विधौ इति निषेधः प्रवर्तते' इति ज्ञापयति। तेन वक्ष्यमाणेत्यत्र ङीपोऽभावः सिद्ध इति फलम् ।

न च भाष्ये "पिच्च ङिन्न ङिच्च पिन्न" इति व्याख्यानादौपदेशिकेन तिबादिवृत्तिपित्त्वेन आरोपितो लिङ्वृत्तिङित्त्वधर्मो बाध्यते इति सूत्रे ङिद्ग्रहणं सफलमिति वाच्यम् ? पूर्ववत्स्थानिवत्त्वेन (२)शित्त्वधर्मस्य आनयनेन सिद्धौ व्यर्थीभूतेन शानज्घटकशकारेण पूर्वार्थस्य ज्ञापितत्वात् ।

## चिकीर्ष्यात् ।

अयम्भावः—"अतो येय" इति सूत्रे सार्वधातुकपदाननुवृत्तौ "मध्ये ये पठिता अपवादास्ते पूर्वान् विधीन् बाधन्ते नोत्तरान्" इति न्यायात् "अतो येय" इति सूत्रम् "अतो लोप" इत्यस्यैव बाधकं भवेत्, नतु "अतो दीर्घो यञि" इति सूत्रस्य। ततश्च चिकीर्ष्यादित्यत्रेयादेशापत्तिः, भवेदित्यत्र च परत्वाद् "अतो दीर्घो यञि" इति सूत्रेण दीर्घापत्तिरिति दोषद्वयपरिहारार्थं सार्वधातुकपदानुवृत्तिः कार्या इति सारांशः।

## भवेयुः ।

परत्वान्नित्य(३)त्वाच्च "उस्यपदान्तात्" इति सूत्रं बाधित्वा "अतो येयः" इति सूत्रेणेयादेशो भवतु इति प्राचीना वदन्ति ।

वस्तुतस्तु सार्वधातुकसंज्ञानिषेधपक्षस्य "उस्यपदान्तात्" इति सूत्रस्यान्तरङ्गत्वेन पररूपमेव युक्तंस्यादिति विचारे "अतो येयः" इति सूत्रस्य सार्वधातुकावयवस्य यास् इत्यस्येयादेशः स्यादिति व्याख्या कार्या। तथाचायमियादेशस्सलोपस्यापवादः स्यात्।

एवञ्च भव यास् उस् इति दशायां सकारान्तत्वेन "उस्य पदान्तात्" इति सूत्राप्रवृत्तौ इयादेशे भवेयुरिति सिद्धम् 'अतो यास् इय' इति सूत्रे सकारस्य लवयत्वलोपे सति गुणे कर्तव्ये यत्वविधायकशास्त्रस्यासिद्धत्वं तु सौत्रत्वान्न भवति ।

---

(१) लिङ्वृत्तीति। 'अवयवेऽचरितार्थं लिङ्गं समुदायोपकारकं भवति' इति न्यायादिति भावः। (२) शित्वधर्मस्येति। "हलः श्नः शानज्झौ" अत्रस्थस्येति भावः। (३) नित्यत्वाच्चेति। ननु कृते पररूपे चेदियादेशस्य प्राप्तिः तदा अस्य नित्यत्वं सैव तु कथं इतिचेद्। एकादेशस्य पूर्वान्तत्वेन ग्रहणादिति भावः।

## (१) प्रत्यये किम् ? वव्रश्च ।

अयमाशयः—व्रश्चधातोर्लिटि तिपि णलादेशे द्वित्वादिकार्ये च कृते वव्रश्चेति रूपं सिध्यति । "उरत्" इति सूत्रेऽङ्गस्याधिकारो वर्तते । ततश्चाङ्गावयवाभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे इति सूत्रार्थो भवति । एवञ्चात्वादेशः परनिमित्तको भवतीति वकारस्य सम्प्रसारणे कर्तव्ये "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण ऋकारवृत्तिसम्प्रसारणत्वमकारे आनीय "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रेण वकारस्य सम्प्रसारणं न भवति । यद्यङ्गेन प्रत्ययस्याक्षेपो न स्यात्तदा "अचः परस्मिन्" इति सूत्राप्रवृत्त्या वकारस्य सम्प्रसारणं स्यादेव ।

## एकाचः किम् ।

अयम्भावः—देहलीदीपकन्यायेनोपदेशपदार्थस्यैकाच—अनुदात्तेत्युभयपदार्थे अन्वये सति पिपठिषति बिभित्सतीत्यादौ वर्तमानकालेऽनेकाच्त्वेऽपि इण्निषेधः पूर्वान्वयस्य, कर्तुं गन्तुमित्यादौ सम्प्रति नित्स्वरेणोदात्तत्वेऽपि इण्निषेधोऽनुदात्तान्वयस्य च फलमिति कार्यद्वयसिद्धिः ।

कौमुदीकाराः उपदेशेऽनुदात्ताः सर्वे धातव एकाच एवेति "उपदेशेऽनुदात्तात्" इत्यनेनैवेष्टसिद्धौ 'अच' इत्यत्र पञ्चमीविभक्तिबोध्यस्यैक(२)त्वस्य विवक्षया अज्विशिष्टेऽच्पदस्य लक्षणया च एकाज्विशिष्टार्थकमच्पदं व्यर्थमेव । तदेव व्यर्थं सत्, "श्तिपाशपा" इत्यादिकारिकायां ज्ञापकमिति वदन्ति । एकग्रहणं तु उपदेशमात्रे य एका ततः परस्येट् न स्यादिति बोधनार्थम् । ततश्च हन् धातोरेकाच्त्वेऽपि वधादेशेऽनेकाच्त्वादिण्निषेधो न भवतीति फलम् ।

उपदेशेऽनुदात्ता एकाच एवेति पूर्वोक्तयुक्त्या लक्ष्यसिद्धौ लक्षणया एकाज्वाचकस्य अच्पदस्य सामर्थ्येनोपदेशत्वावच्छेदेन सकलोपदेशे, इति यावत् एकाच् ततः परस्येण्न स्यादित्यर्थे बोधिते सति अवधीदित्यत्रेण्निषेधाभावे सिद्धे एकग्रहणं व्यर्थं सदुक्तकारिकायां ज्ञापकमित्यपरेषां मतम् ।

## शसि दद्योः ।

अयम्भावः—"अत एकहल्मध्येऽनादेशादेर्लिटि" इति सूत्रेऽनादेशादेरिति पदे आदेश आदौ यस्य स आदेशादिः न आदेशादिरनादेशादिस्तस्येति समासे जाते आदेशपदेन योऽहि वैरूप्यस्य रूपान्तरस्य, सम्पादकः—कारकः स एव ग्राह्यः । यथा

---

(१) **प्रत्यये किमिति ।** अङ्गेन प्रत्ययाक्षेपः किमर्थमिति प्रश्नाशयः इति भावः । (२) **एकत्वस्येति ।** न च "अर्धं नपुंसकम्" "आकडारादेका संज्ञा" इति सूत्रद्वयस्थनपुंसकग्रहणैकाग्रहणाभ्यां ज्ञापितस्य "सूत्रे लिङ्गवचनमतन्त्रम्" इत्यस्य सत्वात् कथमुक्तप्रकारोपपत्तिरिति वाच्यम् । साक्षादुपदेशग्रहणेन चरितार्थत्वसम्भवे परम्परोपदेशाङ्गीकारे बीजाभावात् ।

जगादेत्यत्र गकारस्य जकारादेशो भवति । तत्र गकारस्यान्यत् रूपं जायते । तथा च दधधात्वादौ दकारस्य दकाररूपादेशे जातेऽपि एत्वाभ्यासलोपौ भवत एव । प्रमाण-ञ्चात्र "न शसददवादिगुणानाम्" इति सूत्रे एत्वप्रतिषेधार्थं शसिदद्योः पाठः । अन्य-था आदेशपदेन यदि सामान्यादेशस्य ग्रहणं स्यात्तदा शसिदद्योरपि "अभ्यासे चर्च" इतिसूत्रेण शकारस्य शकाररूपादेशो दकारस्य च दकाररूपादेशो भवत्येवेति तत्रैत्व-विधायकसूत्राप्रवृत्तौ निषेधकशास्त्रे तयोः पाठो निष्फल एव ।

## ऊखतुः ।

अयमाशयः—आर्धधातुकाव्यवहिताङ्गावयव इक् इत्याकारसम्बन्धेन जायमानो गुणादेशो गुरुमत्वेन इगार्धधातुकयोर्मध्ये पतितः आम्प्रत्ययस्य निमित्तं न स्या-दित्याह—सन्नि(१)पातपरिभाषयेति ।

हलो लोपे उ उख् इति स्थितेऽङ्गाधिकारित्वात् "वार्णादाङ्गं बलीयः" इति परि-भाषया "पर्जन्यवल्लक्षणप्रवृत्तिर्भवति" इतियुक्तया पूर्वं ह्रस्वो भवति ततो दीर्घः । दीर्घे च कृते "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति न्यायात्पूर्वान्तवद्भावेनैकादेशे प्राप्तो ह्रस्वो न भवति । परत्वाच्चेत्यस्यायमाशयः—"अकः सवर्णे दीर्घः" इति सूत्रस्य पर-त्वान्नाम परकालेन प्रवृत्तत्वात् । तथा च "हलादिः शेषः" इति सूत्रात्पूर्वं ह्रस्वस्ततः खलोपस्ततो दीर्घः ।

एवञ्चैकस्मिन् काले ह्रस्वदीर्घयोः प्रवृत्त्यभावेन "वार्णादाङ्गम्" इति परिभाषाया विषय एव नास्तीति दीर्घे कृते "लक्ष्ये लक्षणम्"—इति न्यायाद्ध्रस्वाभावः ।

## "कृसृभृवृ" ।

"कृसृभृ" एषां त्रयाणामनुदात्तत्वात् "एकाच उपदेशेऽनुदात्तात्" इत्यनेन वृञ उदात्तत्वात् "श्र्युकः क्किति" इत्यनेन थलोऽकित्वात् "श्र्युकः क्किति" इत्यस्याप्र-वृत्त्या "ववर्थ" इति वेदे निर्देशाच्च सर्वत्रैवेण्निषेधरूपकार्ये सिद्धे चतुर्णां ग्रहणं व्य-र्थमेव । तदेव व्यर्थं सत् "एकाच उपदेशेऽनुदात्तात्" इति प्रकृत्याश्रयेण "श्र्युकः क्-किति" इति प्रत्ययाश्रयेण च लिटीण्निषेधश्चेत्तर्हि क्रादिभ्यश्चतुर्भ्य एवेति नियमयति । वृञस्तु वेदे एवेति च । तेनान्येषां धातूनां लिटीण्, लोके ववरिथ इति च फलद्वयं सिध्यति । स्वादीनां चतुर्णां ग्रहणं तु विधित्वसम्भावनया भारद्वाजमतेन ऋदन्ता-तिरिक्तस्वादीनां थलीडागमः प्राप्नोति तन्निषेधार्थम् । वमादिषु क्रादिनियमेन प्रा-

(१) सन्निपातेति । "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषास्व-रूपम् । आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः, अन्ये तु "इजादेः" इति सूत्रे गुरुमान् इति नित्ययोगे मतुप् ततश्च नित्यं यो गुरुमान् 'एध वृद्धौ, इत्यादिस्तत्रैव स्यात्, इति नात्र आम्प्रसक्तिरित्याहुः ॥

स्स्येडागमस्य निषेधार्थञ्चेति विध्यर्थमेव ।

इत्थञ्च क्रादिनियमात् क्राद्यन्येषां धातूनां लिटीट्प्राप्तौ अजन्तानाम् "अचस्तास्वत्थल्यनिटो नित्यम्" इत्यनेन अकारवताञ्चोपदेशे "अत्वत" इत्यनेन थलीण्निषेधे सिद्धे "ऋतो भारद्वाजस्य" इति सूत्रं व्यर्थं सत् अजन्तानामकारवताञ्च थलीण्निषेधश्चेत्तर्हि ऋदन्तानामेवेति सामान्यापेक्षया नियामकम् । तेन थलि ऋदन्ताद्न्येषां धातूनां भारद्वाजमतेनेट्, अन्येषामाचार्याणां मते इडभावे च पेचिथ पपक्थ विवयिथ विवेथेत्यादिस्थलेषु द्वे द्वे रूपे सिध्यतः ।

न च भारद्वाजनियमेन स्वादीनामपि थलीट् स्यादिति वाच्यम् । "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति परिभाषया "अचस्तास्वत्थल्यनिटो नित्यम्" 'उपदेशेऽत्वतः" इति सूत्रद्वयेन प्राप्तस्यैवेण्निषेधस्य भारद्वाजनियमस्य निवर्त्तकत्वात् । क्रादिनियमेन स्वादिग्रहणम् "अचस्तास्वत्" इति "उपदेशेऽत्वतः" इति सूत्रद्वयञ्चेण्निषेधार्थं वर्तते । तथाच—यथा भारद्वाजनियमेन ऋदन्तातिरिक्तधातुषु सूत्रद्वयं न प्रवर्तते, तथैव स्वादिग्रहणमपि न प्रवर्तेतामिति न शङ्कनीयम् 'अनन्तरस्य' इति न्यायादिति सारांशः ।

प्रकृत्याश्रयत्वञ्च अव्यवहितोत्तरत्वसम्बन्धानवच्छिन्नधातुत्वावच्छिन्नधातुनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकप्रत्ययघटितशास्त्रत्वम् । तद्भिन्नत्वं प्रत्ययाश्रयत्वम् इत्थञ्च "एकाच उपदेशेऽनुदात्तात्" इति सूत्रस्य उपदेशे एकाचो विहितस्यार्धधातुकस्येण्नेत्यर्थः । "श्र्युकः किति" इत्यस्य च श्रिञ एकाच उगन्ताच्च परयोर्गित्किलोरिण्नेत्यर्थः । तथाचाव्यवहितोत्तरत्वेत्याद्यर्थः "एकाच्" सूत्रार्थं घटते "श्र्युकः किति" इत्यत्र च न घटते इति ध्येयम् ।

## संज्ञायाः कार्यकालत्वात् ।

अयमाशयः—"यथोद्देशं संज्ञापरिभाषम्" "कार्यकालं संज्ञापरिभाषम्" इति पक्षद्वयं वर्तते । तत्र कार्यकालपक्षाश्रयेणायं ग्रन्थस्तत्र च पक्षे यदा कार्यं तदा संज्ञेति सिद्धान्तेन सन्वद्भावविषये दीर्घविषये च अङ्गसंज्ञा अभ्याससंज्ञा च भविष्यति । तथा च द्वे इत्यनेनोच्चारणे इति कृदन्तपदमध्याह्रियते, तद्योगे "कर्तृकर्मणोः कृति" इति सूत्रेण अङ्गस्येति कर्मणि(१) षष्ठी ततश्चाङ्गाभ्यासपदयोर्विधेयेन सहैकवाक्यतया अङ्गकर्मकं यद्द्विरुच्चारणं तस्य पूर्वो भागोऽभ्याससंज्ञकः स्यात् । तस्य च सन्वद्भावो भवतु इत्यर्थे जाते सति यत्र धातावङ्गं द्विरुच्यते तत्रैव दीर्घसन्वद्भावौ स्यातामित्यभिप्रेत्याह—संज्ञाया इत्यादि ॥

(१) कर्मणि षष्ठीति । अङ्गस्येति षष्ठ्याः कारकविभक्तित्वसम्भवे तदुपेक्ष्य शेषषष्ठीकल्पनाया अन्याय्यत्वादिति भावः ।

परञ्च माधवमते चकास्त्यर्थापयतीत्यादावङ्गस्य द्वित्वाभावेन "पूर्वोऽभ्यास" इत्यादिशास्त्राणामप्रवृत्त्या आर्तीथपदित्यादिप्रयोगाणां सिद्धि(१)र्न स्यादिति यथोद्दशपक्षो मान्यः । तत्र पक्षे च संज्ञाशास्त्राणां विधिशास्त्रे एकवाक्यता न भवतीति अङ्गसंज्ञानिमित्तमित्यादि । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्यादिति च मूलोक्तार्थद्वयेन सर्वे प्रयोगाः सिध्यन्तीत्याह-(२)वस्तुत इत्यादि ।

णिप्रत्ययो यदि लघुनोऽस्य विशेषणं भवति तदा चङ्परे णौ यल्लघु तत्परो योऽङ्गावयवोऽभ्यासस्तस्य सनीव कार्यं स्यादित्यर्थो भवति । ततश्च चकासृधातौ णिप्रत्ययाव्यवहितं लघु न वर्तते । इति दीर्घसन्वद्भावौ न भवतः ।

अथ च यदि णिप्रत्ययोऽङ्गस्य विशेषणं भवति, तदा चङ्परे णौ यदङ्गं तदवयवो योऽभ्यासो लघुपरस्तस्य सनीवकार्यं स्यादित्यर्थो भवति ।

एवञ्च चकासृधातौ णिप्रत्ययाव्यवहितमङ्गं वर्तते । इति दीर्घसन्वद्भावौ भवत एव । कमुधात्वादौ णिप्रत्यये परतोऽग्लोपो न विद्यते इति अचीकमत इत्यादौ सन्वद्भावो भवति । एतदर्थमेव णिप्रत्यये परतो यत्राग्लोपो न स्यात्तदैव सन्वद्भावो भवतु इत्यर्थो मुनिना कृतः ।

## अथ कथमुदयति ।

ननु अयधातुरात्मनेपदे पठित इति शानच्प्रत्ययस्यैव युक्तत्वेनोदयतीति शतृप्रत्ययान्तप्रयोगः कथमिति चेन्न । कटीत्यत्र प्रश्लिष्टस्य ई धातोः प्रयोगत्वात् । अथवा चक्षिङ् धातौ इकाररूपानुदात्तस्वरेणैवात्मनेपदे सिद्धे ङकारोपादानं व्यर्थं सत् "अनुदात्तेत्त्वनिमित्तकमात्मनेपदमनित्यं भवति" इति बोधयति । तेनो(३)क्तप्रयोगस्य साधुत्वम् ।

## घस्लृ अदने ।

अयमाशयः—यद्यस्य धातोः सर्वत्र प्रयोगः स्यात्तदा लिट्लकारेऽपि प्रयोगः स्यादिति पाक्षिकघस्लादेशविधानार्थं "लिट्यन्यतरस्याम्" इति सूत्रमेव व्यर्थं स्यात् ।

एवञ्च यत्र किमपि लिङ्गं सूत्रादिवचनं वा प्रमाणं भवेत्तत्रवास्य धातोः प्रयोगः स्यात् । तथाच भ्वादौ पाठः शब्विषये प्रयोगो भवतीति बोधयति । ऌकारोपादानमङि प्रयोगं बोधयति । अनिट्कारिकासु पाठो वलाद्यार्धधातुके प्रयोगं बोधयति । "सृघस्यदः क्मरच्" इति सूत्रं क्मरच्प्रत्ययविषये प्रयोगो भवतीति बोधयति ।

---

( १ ) सिद्धिर्नस्यादिति । माधवमते 'आर्तथपत्, अचचकासत्, और्णुनवम्, इत्येव भवतीति भावः । ( २ ) अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्यादिषु तदेव स्वीकृतत्वाच्चेत्यभिप्रेत्याह—वस्तुत इत्यादिना । ( ३ ) उक्तप्रयोगस्येति । फलम्–'स्फायन्' इत्यत्र अनुदात्तेत्वलक्षणात्मनेपदस्याभाव इति ध्येयम् ।

## स्यन्त्स्यति ।

"वृद्भ्यः स्यसनोः" इति सूत्रेण परस्मैपदे कृते सति "न वृद्भ्यश्चतुर्भ्यः" इति सूत्रे चतुर्ग्रहणसामर्थ्येन अन्तरङ्गमपि(१) "स्वरतिसूति" इत्यादि सूत्रं न प्रवर्तते इतीण्निषेधे(२) तत्प्रयोगसिद्धिः ।

## मत्स्योदकेऽनुष्यन्देते ।

"अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" इति सूत्रेऽप्राणिषु इति पदस्य प्राणिभिन्नेषु कर्तृषु सत्सु षत्वं स्यादित्यर्थे मत्स्योदके इति समुदाये प्राणिभिन्नत्वं वर्तते एवेति षत्वं सिद्ध्यति । (३) प्रसज्यप्रतिषेधे तु प्राणिषु कर्तृषु षत्वं न स्यादित्यर्थेऽपर्याप्त्या प्राणिनि मत्स्यस्यापि कर्तृत्वं वर्तते इति षत्वं दुर्लभं स्यादिति भावः ।

## प्रविघाटयिता ।

ननु "घटादयो मितः" इति वचनेन मित्संज्ञायां प्रविघाटयिता(४)इत्यादि प्रयोगा असंगता एवेति चेन्न । चुरादौ पठितस्य 'घट संघाते' इति धातोः प्रयोगात् ।

नच चौरादिकस्यैव घट संघाते इति धातोश्चेष्टारूपविशेषार्थे मित्वार्थमनुवाद इति वाच्यम् । "नान्येऽमितोऽहेतौ" इति वचनेन ज्ञपादिभ्योऽन्येषां चुरादिपठितानां धातूनां मित्वाभावात् । एवञ्च घट चेष्टायामिति स्वतन्त्रोऽन्यधातुरिति सारांशः।

## विव्यथे ।

अयमाशयः—'सत्यपि सम्भवे बाधनं भवति' इति वचनेन हलोपविषये "हलादिः शेषः" इति(५)बाधित्वा "व्यथो लिटि" इति सूत्रेण सम्प्रसारणे थकारस्य "हलादिः शेषः" इति लोपे "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधे च कृते विव्यथे इति रूपं सिध्यति ।

न च "अभ्यासविकारे बाध्यबाधकभावो नास्ति" इति वचनेन 'हलादिः शेषापवादः' इति ग्रन्थासङ्गतिरिति वाच्यम् । "लिट्यभ्यासस्योभयेषाम्" इति सूत्रे उभयेषां ग्रहणसामर्थ्येन अभ्यासलोपविषये उक्तवचनाप्रवृत्तेः ।

---

(१) **अन्तरङ्गमपीति** । सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्वमिति भावः । (२) **तत्प्रयोगसिद्धिरिति** । "न वृद्भ्यश्चतुर्भ्यः" इत्यत्र चतुर्भ्यः इति व्यर्थम् । प्रयोगसिद्धिस्तु "निषेधाश्च बलीयांसः" इति न्यायेनान्तरङ्गाणामपि बाधसिद्धेरिति बोध्यम् । (३) **प्रसज्यप्रतिषेध इति** । असमर्थसमासवाक्यभेदापत्तिदोषाभ्यां प्रसज्यप्रतिषेधो न सूत्रेऽभिप्रेतः इति भावः । (४) **इत्यादीति** । आदिना कमलवनोद्घाटनं कुरुते इति बोध्यम् । (५) **बाधित्वेति** । 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्' इति वचनादिति भावः ।

## कथं विज्ञापनाभर्तृषु ।

ननु "मारणतोषणनिशामनेषु ज्ञा" इति वचनेन मित्संज्ञायां "मितां ह्रस्व" इति ह्रस्वे विज्ञापना इत्यादिप्रयोगा दुर्लभा एवेति चेन्न । निशामनं चाक्षुषज्ञानमिति वदतो माधवस्य मतेऽत्र चाक्षुषज्ञानरूपार्थस्याभावेन मित्वाभावात् । ज्ञापनमात्रे मित्वमितिमते, अत्र ज्ञापनरूपार्थस्य सत्वेन मित्संज्ञाया अवसर इति 'ज्ञा नियोगे' चौरादिकस्योक्तरूपम् । चुरादौ च ज्ञपादिभ्योऽन्ये मितो नेति मित्वाभावः । निशानेष्विति पाठे तु अत्र तीक्ष्णकरणरूपार्थस्याभावेन सन्देहाभावः ।

## स्वामी तु "न कमीति" ।

अयम्भावः – स्वामी "न कम्यमिचमाम्" इति सूत्रात् "शमो दर्शने" इत्यादिसूत्रत्रये नञ्पदस्यानुवृत्तिं न करोतीति स्वामिमते आयामयतीति उदाहरणे आयमयतीति स्यात् । यमयतीति प्रत्युदाहरणे यामयति ब्राह्मणानिति स्यात् । एवमवस्खादयति परिस्खादयतीत्युदाहरणे अवस्खदयति परिस्खदयतीति स्यात् । प्रत्युदाहरणे च प्रस्खादयतीति स्यात् ।

एवञ्च पर्यवसितं नियमयञ्चिति प्रयोगः साधुरेव । नञ्पदानुवृत्तौ तु यमोऽपरिवेषणे "स्खदिरवपरिभ्याञ्च" इति सूत्रद्वये उदाहरणं प्रत्युदाहरणञ्च मूलोक्तम्बोध्यम् । यदि "शमो दर्शने" इत्यादिसूत्रत्रये नञ्पदानुवृत्तिरिष्टा नाभविष्यत्तदा "नकमि" इत्यादिसूत्रात्प्रागेव सूत्रत्रयस्य पाठमकरिष्यत् । तस्मात् स्वामिमतं न शोभनम् ।

## भ्रेजे ।

अयं भावः—"फणाञ्च सप्तानाम्" इति सूत्रेण एत्वाभ्यासलोपार्थं भ्राज्धातोः फणादौ पाठः । पूर्वं पाठस्तु "व्रश्चादि" सूत्रेण प्राप्तस्य षत्वस्य निषेधार्थः । तत्र हि राज्धातुः फणादिर्लभ्यते तत्साहचर्यात् भ्राजधातुरपि फणादेरेव ग्राह्य इति पूर्वपठितभ्राजधातुविषये षत्वाभावः (१)सिध्यति ।

## सस्वरिव ।

अयमाशयः—"आर्धधातुकस्येड्वलादेः"इत्यादिविधिशास्त्रेभ्यः प्राक् "नेड्वशि कृति" "श्र्युकः किति" इत्यादिसूत्राणां प्रकरणमाचार्येण कृतमिति तत्सामर्थ्येन परमपि "स्वरति" इत्यादिसूत्रं बाधित्वा "श्र्युकः किति" इति निषेधः प्राप्तस्तमपि बाधित्वा क्रादिनियमान्नित्यमिट् भवति ।

## प्रणिमयते ।

अयम्भावः–प्रणिदयते प्रणिधयतीत्यादिप्रयोगे णत्वसिद्ध्यर्थं "नेर्गद" इत्यादिसूत्रे

---

( १ ) षत्वाभाव इति । 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषयेति भावः ।

"घुमा" इत्यस्य स्थाने(१)घुप्रकृतिमाङिति पठनीयम्, घुश्च प्रकृतिश्च माङ्चेति द्वन्द्वः तत्र प्रकृतिश्च सामीप्यात् घुमाङोर्ग्राह्या तथा च घोर्या प्रकृतिर्माश्च या प्रकृतिस्तस्यां परायां सत्यां नेर्नस्य णत्वं स्यादित्यर्थे दारूपा धारूपा च घोः प्रकृतिः मेङ् माङ् च माङः प्रकृतिरित्युभयत्रापि णत्वं सिद्धम्भवति ।

## परिष्करणम् ।

ननु णत्वे कर्तव्ये पदद्वयाश्रितत्वेन बहिरङ्गतया "परेश्च" इति सूत्रस्यासिद्धत्वात्कथमत्र णत्वमिति चेन्न । पूर्वं धातुरुपसर्गेण युज्यते, ततः साधनेनेति भाष्यवचनात् धातूपसर्गयोर्यत्कार्यं तस्यान्तरङ्गत्वात् पूर्वं धातोः साधनेन सम्बन्धो भवति ततश्चोपसर्गेणेति मते तु पूर्वोक्तरीत्या षत्वस्यासिद्धत्वाण्णत्वमत्र दुर्लभम् ।

## विव्याध ।

अयमाशयः—"लिट्यभ्यासस्योभयेषाम्" इति सूत्रे उभयेषां ग्रहणसामर्थ्येन वच्यादीनां ग्रह्यादीनाञ्चाभ्यासस्य सम्प्रसारणमेव स्यात् । अन्यत् यत्प्राप्नोति तन्न स्यादित्यर्थावबोधनेन परमपि "हलादिः शेषः" इति सूत्रं बाधित्वा "लिट्यभ्यासस्योभयेषाम्" इति सूत्रेण यकारस्य सम्प्रसारणे उक्तरूपसिद्धिः । इति भ्वादयः ।

---

# अथादादयः ।

## विचक्षणः प्रथयन् ।

अयमाशयः—चक्षिङ् व्यक्तायां वाचि धातौ इकारोऽनुदात्तस्तस्य फलञ्च "अनुदात्तेतश्च हलादेः" इति सूत्रेण युच्प्रत्ययसिद्धिः । ततश्च विचक्षण इति प्रयोगः सिद्ध्यति, नुम् तु न भवति । यतो यत्र धातौ इकारोऽन्तावयवो भवति तत्रैव "इदितो नुम् धातोः" इत्यनेन नुम् भवतीति(२)व्याख्यानात् । इत्थञ्चेकारस्यानुदात्तत्वात् "अनुदात्तङित आत्मनेपदम्" इत्यनेनानुदात्तेत्वनिमित्तके आत्मनेपदे सिद्धे ङकारोपादानं व्यर्थमेव । तदेव व्यर्थं सत् "अनुदात्तेत्वलक्षणप्रयुक्तमात्मनेपदमनित्यम्" इति ज्ञापयति । तेन स्फायन्निति प्रयोगे शतृप्रत्ययसिद्धिरिति कौमुदीकाराः ।

नवीनास्तु सति ङकारे चक्षिङ्धातुरन्त्येदित् न भवतीति नुम्निषेधार्थं ङकारोपादानं सफलमिति ज्ञापकत्वाभावेन स्फायन्नित्यादिप्रयोगा असाधव एवेति वदन्ति ।

---

(१) ननु "नेर्गदनद" इति कथमिह णत्वं स्यात् । शिद्विषये आत्वाभावेन भारूपत्वाभावात् । अशिद्विषये कृतात्वेऽपि अस्मिन् णत्वं दुर्लभमेव । 'लक्षणप्रतिपदोक्त' परिभाषया लाक्षणिकस्यास्य ग्रहणं न भवेत् । इति चेत्—समाधीयते—घुप्रकृतिमाङित्यादिना । (२) व्याख्यानादिति । व्याख्यानञ्च "इदितो नुम् धातोः" इत्यत्र इच्चासौ इच्चेति कर्मधारयसमासेन धातोर्विशेषणम् । तेन इदिदन्तस्य धातोर्नुम् भवतीति भावः ।

## (१) युयात् ।

नन्वत्र हलादिपित्त्वेन "उतो वृद्धिर्लुकि हलि" इति सूत्रेण वृद्धिः कथन्नेति चेन्न । "पिच्च ङिन्न ङिच्च पिन्न" इति भाष्यवचनेन विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । पित्त्वं सर्वलकारेषु तिष्ठति । ङित्त्वं तु लिङ्लकारे एवेति सारांशः ।

## अभीयात् ।

ननु पूर्वान्तवद्भावेनोपसर्गत्वं परादिवद्भावेन च धातुत्वं वर्तत एवेति "एतेर्लिङि" इति सूत्रेण ह्रस्वः कथन्नेति चेन्न । "उभयत आश्रयणे नान्तादिवत्" इति वचनेन निषेधात् ।

## अध्ययै ।

अयमाशयः—'पूर्वं धातुः साधनेन युज्यते' इति मते गुणे अयादेशे च कृते यण् भवति ततश्चोक्तप्रयोगस्य सिद्धिः । 'पूर्वं धातुरुपसर्गेण युज्यते' इतिमते तु धातूपसर्गयोरेव कार्यं पूर्वं स्यादिति अन्तरङ्गत्वात्प्राप्तो दीर्घो "णेरध्ययने वृत्तम्" इति सूत्रे अध्ययने इति पदनिर्देशान्न भवति । यदि पूर्वं दीर्घः स्यात्तदोक्तप्रयोगनिर्देशोऽनुपपन्नः स्यात् ।

## अयं सार्वधातुकमात्रविषयः ।

अयम्भावः—"सस्थानत्वं नमः ख्यात्रे" इति वार्तिकप्रत्याख्यानपरकभाष्यप्रामाण्येन ख्याधातुप्रयोगः सार्वधातुकविषये एव भवति, नत्वार्धधातुकविषये । तथाहि—ख्याधातोस्तृच्प्रत्यये ख्यात्र इति पदं सिध्यति । अथ च चक्षिङः ख्याञादेशे तृच् प्रत्यये ख्यात्रे इति पदं सिध्यति । तथाचोक्तप्रकारद्वयेन सिद्धे ख्यात्रे इति प्रयोगे वार्तिकसत्वे जिह्वामूलीयो न भवति । प्रत्याख्यानपक्षे च(२)यकारस्यासिद्धतया क्शाञ् इत्याकारकादेशे शर्परत्वेन "शर्परे विसर्जनीयः" इति सूत्रेण जिह्वामूलीयस्य निषेधो भवति ।

ख्याधातुप्रयोगे तु शर्परत्वाभावेन "शर्परे विसर्जनीयः" इति सूत्राप्रवृत्त्या जिह्वामूलीयस्य निषेधो न भवतीति आरम्भप्रत्याख्यानयोः फलभेदः समायाति । फलभेदे च प्रत्याख्यानं शोभनं न भवतीति तादृशभाष्यासङ्गत्या ख्याधातोः प्रयोगः सार्वधातुके एवेति ज्ञायते ।

---

(१) युयादिति । अत्र केचित् 'युयात्' 'स्तुयात्' इत्यादौ "ङिच्च पिन्न पिच्च ङिन्न" इति भाष्यं नाश्रयन्ति । किन्तु "संज्ञापूर्वको विधिरनित्यः" इति परिभाषया समाधानं कुर्वन्ति । अन्यथा "उतो वृद्धिर्लुकि हलि" इत्यत्र "उत औत्" इत्येव वदेदिति भावः ।

(२) यकारस्यासिद्धतयेति । त्रैपादिकं "शस्य यो वा" इति सूत्रविहितत्वादिति भावः ।

वार्त्तिकार्थस्तु "नमः ख्यात्रे" इति प्रयोगे सस्थानत्वं नाम जिह्वामूलीयः स च न भवतीति "शस्य यो वा" इति वचनेन यो हि यकारः कृतः स सर्वस्मिन्नपि कार्ये कर्त्तव्येऽसिद्धो भवतीति जिह्वामूलीये कर्त्तव्ये यकारस्यासिद्धत्वादुक्तप्रकारेण जिह्वामूलीयस्य निषेधे तदर्थं वार्तिकं निष्फलमेवेति प्रत्याख्यानप्रकारः।

## दरिद्रौ।

अयम्भावः—अक्षरसमाम्नाये (१)ओकारस्य प्राथम्येन "आत औ णलः" इत्येव सिद्धे आकारविधानं दरिद्राधातौ श्रवणार्थम्। एवञ्च पक्षे आम् न भवतीत्यपि सिद्धम्। अन्यथाऽनेकाच्त्वादामि सति फलाभावात्पुनरपि औकारविधानं व्यर्थमेव।

यत्तु आर्धधातुकविवक्षायामाकारलोपे आदन्तत्वाभावादौ न स्यादिति केषाञ्चिन्मतम्। तन्न। औकारविधानेन "साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते" इत्यर्थस्य बोधितत्वात्। स्वांशे त्रिफलीभूतमौकारविधानं सर्वत्रार्धधातुकविवक्षायामेवाकारलोपः स्यात्। णलि तु औकारादेशोत्तरमाकारलोप इति बोधयतीति सारांशः। इत्यदादयः।

---

# अथ जुहोत्यादयः।

## धत्तः।

धा धातोः तसि शपः "जुहोत्यादिभ्यः श्लुः" इति श्लवादेशे "श्लौ" इति द्वित्त्वे "श्नाभ्यस्तयोः" इत्यकारलोपे "दधस्तथोश्च" इति दकारस्य धकारे चर्त्वे च कृते रूपं सिध्यति। नचात्र "अचः परस्मिन् पूर्वविधौ" इति सूत्रेणाकारस्य स्थानिवद्भावेन झषन्तत्वाभावाद् भष्भावो न स्यादिति वाच्यम्। सूत्रारम्भसामर्थ्येनाऽकारलोपस्य स्थानिवत्त्वनिषेधात्। सिद्धान्ते तु "पूर्वत्रासिद्धे न स्थानिवत्" इति परिभाषया त्रिपादीस्थे भष्भावे कर्त्तव्ये सपादसप्ताध्यायीस्थाकारलोपस्य—स्थानिवत्त्वनिषेधात्। परिभाषारूपयुक्त्या कार्यनिर्वाहे सति वचनारम्भाश्रयणन्निष्फलमिति तत्त्वम्। इति जुहोत्यादयः।

---

# अथ दिवादयः।

## आश्लिक्षत्।

अयम्भावः—अत्र पुषादित्वादङि प्राप्ते—"निरवकाशो विधिरपवादः" इति वचनेनापवादत्वात् "श्लिषः" इति सूत्रेण क्सः।

---

(१) **ओकारस्येति।** यद्यपि ओऔकारयोः द्विमात्रत्वेन विशेषो नास्ति। तथापि ओकारस्य विवृततरत्वेन प्रयत्नलाघवादित्यपि बोध्यम्।

न च "चिण् भावकर्मणोः" इति सूत्रेण प्राप्तस्य चिणोऽपि "श्लिषः" इति सूत्रेण बाधः स्यादिति वाच्यम् । "पुरस्तादपवादा" न्यायेन पुषाद्यङ एव बाधकत्वात्। एवञ्च "श्लिष" इति सूत्रेणाऽऽलिङ्गनरूपधात्वर्थे क्से सिद्धे "आलिङ्गने" इति योगविभागेन श्लिष्धातोरालिङ्गनेऽर्थ एव क्सो नान्यत्रेति नियम्यते । तथा च—यदि "शल इगुपधादनिटः क्सः" इति सूत्रविहितस्य क्सस्य "आलिङ्गने" इत्यनेन नियमो न स्यात्तदा पुनरपि योगविभागो व्यर्थ एव । व्यर्थः सन् "शल" इत्यादिसूत्रविहितस्यापि क्सस्य नियमं करोति । ततश्चानालिङ्गने समश्लिषज्जतु काष्ठामत्यत्राङ् । कर्मणि प्रत्यये तु चिण् सिध्यति ॥

## द्युतादिपाठात् ।

अयमाशयः—भ्वादौ द्युतादिगणे पाठेनैव अमिदत् अमेदिष्टेति रूपद्वयसिद्धौ दिवादिगणे पाठोऽमेदीदिति रूपनिवारणार्थः । इत्थञ्च गणद्वये पाठेन यदि रूपद्वयसिद्धिरेवेष्टा तदा द्युतादिभ्यः पृथगात्मनेपदिषु भ्वादौ पाठेनामेदिष्टेति रूपम् , पुषादौ दिवादिगणे पाठेन च अमिददिति रूपं च सिद्धम्भवतीति द्युतादिगणे पाठो निष्फलः ॥

इति दिवादयः ।

---

# अथ तुदादयः ।

## विव्यच ।

अयम्भावः—"व्यचेः कुटादित्वमनसि" इति वार्तिके यत्रासिभन्नः असूसदृशः कृदन्तीयप्रत्ययः स्यात्तत्रैव(१) लगति । तेन उद्विचितुरित्यादिकृदन्तस्थले कुटादित्वेन "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इति ङित्वेन "ग्रहिज्या०व्यधि" इत्यादिना सम्प्रसारणं सिध्यति । विव्यचेत्यत्र तु तिङन्तत्वेन णित्वाभावपक्षे वार्तिकाप्रवृत्त्या सम्प्रसारणाभावः । अन्यथा तत्रापि सम्प्रसारण स्यादेव । सादृश्यञ्च कृदन्तत्वेन ग्राह्यम् ।

## तृम्फति ।

अयम्भावः—"शे तृम्फादीनाम्" इति वार्तिके आदिशब्दः प्रकाररूपार्थस्य वाचकः । तथा तृम्फसदृशानां धातूनां नुम् स्यादित्यर्थो भवति । सादृश्यञ्च नकारयुक्तत्वेन । एवञ्च नकाररहिततृफादिधातुषु नुम्न भवतीति फलम् ।

## मङ्क्ता ।

अयमाशयः—"मस्जेरन्त्यात्पूर्वो नुम्वाच्यः" इति वचनेन "मस्जिनशोर्झलि" इति

---

(१) तत्रैवेति। यथा 'अब्राह्मणमानय' इत्युक्तौ ब्राह्मणभिन्नं ब्राह्मणसदृशं कञ्चन नरमानीय कृती भवति। नतु लोष्टकाष्ठादिकम् । इदमेव पर्युदासस्वरूपम् । तद्वदत्रापि बोध्यम् ।

सूत्रेण(१)जकारात्पूर्वं नुमि सकारः संयोगादिर्भवति । मकारघटककाकारात्परे नुमि तु सकारस्य संयोगादित्वाभावेन सलोपो न स्यादिति ॥ इति तुदादयः ॥

## अथ तनादयः ।

### सुट्कात्पूर्वः ।

अयमाशयः—धातोः संयोगः पूर्वमुपसर्गेण (२) भवति । ततश्च तन्निमित्तकं कार्यं सुड् भवति, ततश्च स्कृशब्दस्य द्वित्वं, ततः "शर्पूर्वाः खयः" इति सलोपः । इत्थञ्च सञ्चस्करतुरित्यादिरूपे सिद्धे "सु (३) ट्कात्पूर्वः" इति सूत्रं विफलमिति भाष्यकाराशयः ।

### संस्क्रियात् ।

अयम्भावः—"गुणोऽर्तिसंयोगाद्योः" इति सूत्रे नित्यं ग्रहणस्यानुवर्त्तनात्, यः सर्वदा संयोगादिः स्यात्तस्य गुणः स्यादिति सूत्रार्थो भवति । ततश्च कृधातुः सुटि सति संयोगादिः, तदभावेऽसंयोगादिरिति गुणाभावः । एवञ्च संस्कृपीष्टेत्यादौ उच्चारणावस्थायां यः संयोगादिर्धातुर्भवति तस्यैवेडितीडभावो बोध्यः । इति तनादयः ।

---

## अथ क्र्यादयः ।

### अबान्धाम् ।

नचात्र "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावः स्यादिति वाच्यम् । "पूर्वत्रासिद्धम्" इति शास्त्रेण भष्भावविधायकस्यासिद्धत्वेन सिज्लोपात्सकाराभावात् । नच प्रत्ययलक्षणेन पुनरपि भष्भाव इति वाच्यम् । "प्रत्ययलोप" इति सूत्रस्यापि (४) सिज्लोपस्यासिद्धत्वात् ।

---

(१) **जकारात्पूर्वमिति ।** यद्यपि ऋकारात् परत्र नुमि सत्यपि इदं सिध्यति । तथापि 'अन्त्यात्पूर्वो नुम्' इत्यस्योदाहरणं—'मग्नः' इत्यादौ नलोपः । अन्यथा उपधात्वाभावान्नस्य लोपो न स्यादिति भावः । (२) **उपसर्गेणेति ।** अत्र भाष्यं—पूर्वं धातूपसर्गेणेति कृत्वा धातूपसर्गयोः कार्यमन्तरङ्गम्, इति । (३) **"सुट्कात्पूर्वं इति" ।** चिन्त्यमिदम् । अत्रायम्भाष्याशयः–'सुट्' इत्येवाधिकृतमस्तु, "कात्पूर्वः" इति "अड्भ्यासव्यवायेऽपि" इति मास्तु इत्येव-भाष्ये विफलमित्याशयः ॥ (४) **"सिज्लोपस्यासिद्धत्वादिति ।** प्रत्ययलक्षणसूत्रं विध्यर्थम् । "एकाचः" इति सूत्रे ध्वसाहचर्यात्सादिप्रत्यय एव गृह्यते इति मतेनेदम् । यदा त्विदं सूत्रं नियमार्थं [स्थानिवत्सूत्रदृष्ट्या च त्रिपादी नासिद्धा, तदा अलिविधित्वान्न स्थानिवत्त्वमिति बोध्यम् ।

## एषिता ।

नचात्र "तीषसह" इति सूत्रेण विकल्पेनेट् स्यादिति वाच्यम् । अकारविशिष्टस-हधातु (१) साहचर्येणाकारयुक्तस्यैवेषेर्ग्रहणात् । "इषेस्तकारे (२) श्यन्प्रत्ययात्प्रति-षेधः" इतिवार्त्तिकबलेन यत्र श्यन्प्रत्ययः स्यात्तत्रैवेषेः पाक्षिकस्येटोऽभावः स्यात् । एवञ्चात्रेड्विकल्पेन रूपद्वयं निर्बाधमेव । इति क्र्यादयः ।

# अथ चुरादयः ।

## चिन्त इति ।

अयमाशयः—चिन्त इति पाठे कर्त्तव्ये इदित्करणं णिच् (३) विकल्पेन भवतीति ज्ञापयति । एवञ्च चिन्तति चिचिन्तेत्यादिणिज्रहितप्रयोगसिद्धिः फलम्भवति । णि-जभावपक्षे चिन्त्यात् चिन्त्यते इत्यादौ नकारस्योपधात्वेन "अनिदिताम्" इति प्राप्तो नलोपो न भवतीति स्वांशे चरितार्थञ्च । चुरादिपठितेभ्यः सर्वेभ्यो धातुभ्यः, पाक्षिको णिज् भवतीति सामान्येनेदं ज्ञापकमिति केषाञ्चिन्मतम् । अत एव जगाण जगणतु-रित्यादिष्वप्युदाहरणं सङ्गतम्भवति । परञ्च सामान्येन ज्ञापनपक्षे "आधृषाद्वा" इति वचनस्य वैयर्थ्यं भवतीति (४) विशेषापेक्षं ज्ञापकम् । यत्रि धातौ तु इकाराभावेऽपि णिचाऽभावपक्षे यन्त्यते इत्यादौ तकारस्योपधात्वेन नलोपस्य प्राप्तिरेव नास्तीति इकारोच्चारणं स्वांशे सफलतां न लभते इति तस्य ज्ञापकत्वञ्च युक्तम् । चिन्त्यादि-त्यादौ प्राप्तनलोपस्य निषेधार्थमिकारोच्चारणं विध्यर्थमेवास्त्विति न शङ्क्यम् । नलोपे कर्त्तव्ये णिलोपस्य स्थानिवद्भावेन नकारस्योपधात्वाभावात् ।

## औननत् ।

अयमाशयः—पिपविषति पिपविषते इति प्रयोगद्वये इटि सति "द्विर्वचनेऽचि" इति निषेधेन पूर्वं द्वित्वेऽभ्यासेऽकाराभावेनेत्वं दुर्लभं स्यादिति तत्रेकारलाभार्थम् 'ओः पयोः' इत्येव सूत्रयितव्ये वर्गप्रत्याहारजकारग्रहणं व्यर्थीभूय 'णिचि अच आ-देशो न स्याद् द्वित्वे कर्त्तव्ये' इति ज्ञापयति । तेन 'औननत्' इति रूपसिद्धिः फलम् ।

---

(१) **साहचर्येणेति** । यद्यपि 'षह षुह चक्यर्थे' इति दिवादिरपि सहि वर्तते तथापि सहेति शपा निर्देशात् भौवादिकेनैव सहिना 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति परिभाषया साहचर्यं ग्राह्यमिति भावः । (२) **श्यन्प्रत्ययादिति** । श्यन्प्रत्ययवतः इषेस्तकारे परे इड्विकल्पप्रतिषेधः इति वार्त्तिकार्थः । तथा च दैवादिकाद्विकल्पो नेति फलितम् । (३) **णिच् विकल्पेनेति** । 'सर्वेऽपि चुरादयो विकल्पेन णिचं लभन्ते' इति सामान्यापेक्षयेति भावः । (४) **विशेषापेक्षमिति** । असंयोगोपधेकारान्तरूपधातोर्विकल्पेन णिच् इत्या-कारकमिति भावः ।

अन्यथा प्रथममकारलोपे ततो निशब्दस्य द्वित्वे औनिनदिति रूपापत्तिः। अवी-भवदित्यादौ परिनिष्ठिते रूपे, औननदित्यत्र च साधनदशायां द्वित्वस्योत्तरखण्डेऽका-रलाभेन ज्ञापकस्य सजातीयापेक्षत्वाद्यत्र द्विरुक्तावुत्तरखण्डेऽवर्णो लभ्यते तत्रैव परि-भाषा लगति। इत्थञ्चाचिकीर्तदिति रूपं सिद्धम्भवति। अन्यथा तत्रापि परिभाषा-प्रवृत्तौ पूर्वं कृत् शब्दस्य द्वित्वे उक्तरूपासिद्धिः। परिभाषाया अप्रवृत्तौ तु पूर्वम् "उपधायाश्च" इति सूत्रेणेत्वे ततो द्वित्वादौ उक्तरूपसिद्धिः सुलभा।

अपुस्फरदिति रूपसिध्यर्थं णिचीति निमित्तसप्तमी मान्या, परसप्तमीस्वीकारे तु "चिस्फुरोर्णौ" इत्यात्वं णिजव्यवहितकार्यन्न भवतीति परिभाषाया अप्रवृत्तौ पूर्वमा-त्वे उक्तरूपन्न सिध्यतीति ॥ १८९ ॥

## कंसमजीघनत्।

अयमाशयः—कंसवधमाचष्टे इति विग्रहे कंसवधप्रातिपदिकात् "प्रातिपदिकाद्धा-त्वर्थे बहुलमिष्ठवच्च" इति वार्तिकेन णिचि "आख्यानात्" इत्यादिना कृतोऽप्प्रत्य-यस्य लुकि वधप्रकृतेर्हनरूपेण परिवर्तने प्रकृतिवत् द्वितीयान्ते कारके च कृते कंसंवा-तयतीति रूपं सिध्यति।

नचात्र लुकि कंसशब्दात्प्रागट् कंसशब्दस्य द्वित्वं कुत्वतत्वाभावश्च शङ्क्यः। "प्रकृतिवच्च" इति चकारस्य भिन्नक्रमपाठेन सर्वेषां सिद्धत्वात्। तथाहि—कंसवध-शब्दाद्विहितो णिच् इति "यस्मात्" इति सूत्रबलेन कंसविशिष्टस्यैवाङ्गसंज्ञा स्यात्। सत्याञ्चाङ्गसंज्ञायां कंसशब्दात्प्रागट् कंसशब्दस्य द्वित्वञ्च स्यात्। तथा च "धातोः स्वरूपग्रहणे" इति परिभाषया कुत्वतत्वेऽपि न स्याताम्। ततश्च सर्वेषां निवारणार्थं वार्तिके 'प्रकृतिवच्च' इति चकारः कारकाग्रे पाठ्यः।

इत्थञ्च यादृशं द्वितीयान्तं कारकं कंसमिति हन्धातोः पृथगासीत्, तद्वदत्रापि कंसमिति द्वितीयान्तं कारकं हन्धातोः पृथग् भवतु। यादृशं कार्यञ्च कुत्वतत्वादि ह-नधातोर्भवति एतदप्यत्र भवतु। एवञ्च हन्धातोरेव सर्वं कार्यं स्यादिति सारांशः। यत्र सूत्रे धातोर्नामोच्चारणं भवति तेन सूत्रेण धातोर्विहिते प्रत्यये एव कार्यं भवतीति परिभाषार्थः। अत्र प्रातिपदिकात्प्रत्ययो विहितो न तु धातोः ॥१९०॥ इति चुरादयः।

---

# अथ ण्यन्तप्रक्रिया।

## ण्या(१)कृतिनिर्देशात्।

अयमाशयः—णि(२)त्त्वावच्छिन्नसकलणिच्प्रत्यये परे यत्राग्लोपिनो धातवः स्यु-

---

(१) ण्याकृतीति। "ते प्राग्धातोः" इत्यादौ गत्याकृतिनिर्देशवदिति भावः। (२) णि-त्त्वावच्छिन्नेति। परे तु जातेर्ग्रहणमत्र न सहन्ते। जातेः पौर्वापर्याभावेन ह्रस्वसन्वद्भाव-विधायके चङ्परे णौ इति विशेषणासङ्गतेरिति बोध्यम्।

स्तत्रैव "नाग्लोपि" इत्यादिना उपधाह्रस्वनिषेधः सन्वद्भावनिषेधश्च भवति। तेन चोरिधातोः हेतुमण्णिचि एकस्मिन् णिच्परे एकस्य णिच्प्रत्ययस्य लोपेऽपि उपधाह्रस्वो दीर्घश्च सिध्यति । इत्थञ्च यत्र णिप्रत्यये परे णिप्रत्ययादन्यस्याको लोपस्तत्रैव निषेध-विषयकं सर्वं कार्यम्भवति । अत्र तु णिप्रत्ययस्यैव लोप इति सारांशः ॥ १९१ ॥

## मा भवानिदिधत् ।

अयम्भावः—उपधाह्रस्वे द्वित्वादिकार्ये च कृते उक्तरूपस्य सिद्धिः। नचात्र "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया (१)द्वित्वमेव पूर्वं स्यादिति वाच्यम् । ओणेर्ऋदित्करणेन बहिरङ्गस्याप्युपधाह्रस्वस्य प्राबल्यबोधनात् ।

यदि द्वित्वमेव पूर्वं स्यात्तदा ओणिधातोर्लुङि चङि णिकारस्य द्वित्वे "णौ चङ्युपधायाः" इति ह्रस्वे कर्तव्ये चङ्परको योणिस्तदव्यवहितमङ्गं 'ओ णिण' इति तस्यो पधाया दीर्घाभावेन ह्रस्वाप्राप्त्या ह्रस्वनिषेधार्थम् ओणृ धातोर्ऋकारोपादानं व्यर्थमेव । तदेव व्यर्थं सत् 'उपधाकार्यं द्वित्वात्प्रबलम्' इति बोधयति ॥ १९२ ॥

## औब्जिजत् ।

अयं धातुरुपदेशे 'उब्ज आर्जवे इत्याचार्येण पठितस्तेन "नन्द्राः" इति निषेधाज्जि-शब्दस्य द्वित्वे "भुजन्युब्जौ" इति सूत्रे उब्जेतिनिर्देशेन निपातनादकारस्य बकारे णिलोपे च कृते उक्तरूपं सिध्यति । यदि निपातनकृतबकारस्सदा तिष्ठेत्तदा दकारोच्चारणं व्यर्थमेव स्यादिति तत्सामर्थ्याद्द्वित्वानन्तरमेव बकारः ॥ १९३ ॥

## कथं तर्हि(२)विस्मापयन् ।

अयमाशयः—अत्र मनुष्यवाचेतिकरणेनैव राज्ञो विस्मय इति सिंहरूपप्रयोजका-द्विस्मयाभावेन "नित्यं स्मयतेः"सूत्राप्रवृत्तौ आत्वाभावेन पुग् न स्यात् ।

अथ च यदि प्रयोजकाद्विस्मयः स्वीक्रियते तदा "भीस्म्योर्हेतुभये" इत्यात्मनेपद-मपि स्यात् । तथाच शतृप्रत्यययुक्तं रूपमनुपपन्नं भवतीति सन्देहावसरे विस्माययन्नित्येव पाठ इति (३) साम्प्रदायिकाः ।

अथवा राजा विस्मयते मनुष्यवाक् प्रेरयतीति मनुष्यवाक राजानं विस्मापयते इति, तां मनुष्यवाचं सिंहः प्रेरयतीति सिंहः तया राजानं विस्मापयन्निति ण्यन्ताण्णौ मनुष्यवाक्रूपप्रयोजकाद्विस्मयो विद्यत इत्यात्वा(४)दिकार्यं सुलभम् ॥ १९४ ॥

---

(१) द्वित्वमेवेति । अन्तरङ्गत्वादिति भावः । (२) विस्मापयन्निति । आत्वं कृतमात्मनेपदञ्च नेत्यत्र बीजाभावः इति प्रश्नः । (३) साम्प्रदायिका इति । उभौ तालव्ययकारावेवेति न दोषः इत्युत्तरम् । (४) आत्वादीति । आदिना शतृप्रत्ययस्य सङ्ग्रहो बोध्यः ।

## ऐर्ष्यियत् ।

अयमाशयः-(१)"ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्" इति वार्तिकेन तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति । ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तत्सहितस्य यि इत्येकाचो द्वित्वे णिलोपे च कृते रूपं(२)सिध्यति । तृतीयैकाचो द्वित्वपक्षेऽत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ "अजादेर्द्वितीयस्य" इति ष्यशब्दस्य द्वित्वे यलोपादौ च कृते ऐर्षिष्यदिति रूपम् ।

एवञ्च ऐर्ष्यियदिति रूपसिद्ध्यर्थं वार्तिकम् । ऐर्ष्यिष्यदिति तु "अजादेर्द्वितीयस्य" इत्यनेनैव सिद्धमिति सारांशः ॥ १९५ ॥

## (३) निवृत्तप्रेषणात् ।

अयम्भावः-शयनादुत्थितं स्वभर्त्तारं प्रियाः प्रार्थयन्ते । वयस्याः प्रेरयन्तीति वयस्याः प्रियाभिः प्रार्थयन्तीति दशायां सख्याव्यापारत्यागे यादृशोऽर्थः शुद्धार्थधातोर्भवति । तादृशोऽर्थो ण्यन्ते सत्यपि भवति । इत्थञ्च प्रिया यौवनेन लज्जां विहाय स्वस्वभर्तारं पुनरागमनाय स्वयमेव प्रार्थयन्तीति वाक्यार्थो भवति । स्वार्थे णिचि तु आत्मनेपदिनोऽर्थधातोः प्रार्थयन्ते इत्येव रूपं स्यान्न तु प्रार्थयन्तीति सारांशः ॥ १९६ ॥ इति ण्यन्तप्रक्रिया ॥

---

# अथ सन्नन्तप्रक्रिया ।

## एषिषिषति ।

नचात्र नित्यत्वाद्गुणात्पूर्वं द्वित्वं स्यादिति वाच्यम् । ओणृधातौ ऋकारोच्चारणेन 'उपधाकार्यं' हि द्वित्वात्प्रबलम्, इति (४)सामान्यतो बाधितत्वात् ॥ १९७ ॥

## ऊर्णुनविषति ।

नन्वत्र परत्वात् "सार्वधातुकार्धधातुकयोः" इति गुणेऽवादेशे च कृतेऽभ्यासे उकारस्य श्रवणन्न स्यादिति चेन्न । "द्विर्वचनेऽचि" इति सूत्रेण गुण(५)निषेधात् । न-

---

(१) ईर्ष्यतेरिति । ईर्ष्यतिप्रकृतिप्रत्ययान्तधातोरित्यर्थः । स च ण्यन्तः सन्नन्तश्च विनिगमनाविरहाद्बोध्य इति भावः । (२) रूपमिति । 'ऐर्ष्यियत्' इति रूपमिति भावः । (३) निवृत्तप्रेषणादिति । "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" यस्माद्धातोः प्रेषणा निवृत्ता तस्माद्धातोः प्रकृतसम्बन्ध्यर्थे णिच् भवतीति भावः । (४) सामान्यत इति । "यदयमोणिमृदितं करोति तज्ज्ञापयति—"द्विर्वचनाद्ध्रस्वत्वं बलीयः" इति भाष्यं सामान्यतो ज्ञापके प्रमाणमिति भावः । (५) गुणनिषेधादिति । "द्विर्वचनेऽचि" इति सूत्रेण स्थानिरूपस्यातिदेशेन नोशब्दे नवशब्दे वा नुशब्दबुध्या कार्यप्रवृत्त्या, आदेशस्य गुणस्य निषेधेन वा अभ्यासे उकारश्रवणोपपत्तेरिति भावः ।

चात्र "सन्यङोः" इति सूत्रेण सन्नन्तस्य द्वित्वं प्रति कार्यित्वादिटो निमित्तत्वं न स्यादिति वाच्यम् । इहेटो द्वित्वरूपकार्यत्वाभावेन निमित्तत्वात् । अत्र "सन्यङोः" इति सूत्रेण प्रथमतः सन्नन्तसमुदायस्य द्वित्वरूपकार्यं प्राप्तं भवति, परञ्च "अजादेर्द्वितीयस्य" इति सूत्रबलेन नुशब्दस्यैव द्वित्वरूपकार्यम्भवति न त्विटः । इत्थञ्च "कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते" इति परिभाषाया अवसर एव नास्तीति सारांशः ।

यत्र कार्यमनुभवन् कार्यी वर्तते तत्रैव कार्यी निमित्तत्वेन न स्वीक्रियते इति परिभाषार्थः । अत्र 'यदागमाः' इति परिभाषया इड्रूपसन् द्वित्वान्ननुभवति ॥१९८॥

## अरिरिषति ।

अयमाशयः-अत्र गुणे "अजादेर्द्वितीयस्य" इति सूत्रबलेन(१)रिसशब्दस्य द्वित्वे सलोपे प्रयोगः सिध्यति । नचात्र "द्विर्वचनेऽचि" इति निषेधाद्द्वित्वे कर्तव्ये गुणादेशो न स्यादिति वाच्यम् ? इटो द्वित्वेन 'कार्यमनुभवन्' इत्यादिपरिभाषया तस्य निमित्तत्वायोगात् । अत्रेट एव द्वित्वं भवतीति कार्यित्वं वर्तते तस्य, इति इटो निमित्तत्वेनाश्रयणं भवतीति "द्विर्वचनेचि" इति सूत्रन्न प्रवर्तत" इति सारांशः ॥ १९९ ॥

## उच्चिच्छिषति ।

अयमाशयः-(२) द्वित्वविषये "पूर्वत्रासिद्धीयमद्वित्वे" इति परिभाषयाऽसिद्धत्वं न वर्तते इति च्छशब्दस्य द्वित्वे छकारलोपे प्रयोगः सिध्यति । न चात्र "निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया छलोपे सति तुकोऽपि निवृत्तिः स्यादिति वाच्यम् । "आख्यानात्" इत्यादिवार्तिके प्रकृतिप्रत्यापत्तिवचनेन "च्छ्वोः शूडनुनासिके च" इति सूत्रे तुग्विशिष्टछकारपाठेन च परिभाषाया अनित्यत्वज्ञापनात् ।

यदि परिभाषायाः प्रवृत्तिः सर्वत्र स्यात्तदा छकारस्य शकारे कृते तुको निवृत्तिः परिभाषयैव स्यादिति सूत्रे तुग्ग्रहणं व्यर्थमेव। तदेव व्यर्थंसदुक्तपरिभाषाया अनित्यत्वे प्रमाणं भवतीति सारांशः ॥ २०० ॥ इति सन्नन्तप्रक्रिया ॥

---

# अथ यङ्लुगन्तप्रक्रिया ।

## बोभवीति ।

अयम्भावः—नन्वत्र प्रत्ययलक्षणेन ङित्वधर्ममानीय "अनुदात्तङित आत्मनेप-

---

( १ ) **रिस् शब्दस्येति ।** ऋ धातोः सनि तस्य इटि धातोर्गुणे च कृते अरिस् इति स्थिते "अजादेर्द्वितीयस्य" इति सूत्रेण रिस् शब्दस्य द्वित्वमिति भावः । ( २ ) **द्वित्वविषय इति ।** उच्छ धातोः सनि इटि च कृते "अजादेर्द्वितीयस्य" इत्यनेन द्वित्वे कर्तव्ये शङ्कते-श्चुत्वस्यासिद्धत्वात् चछाभ्यां सहितस्येटो द्वित्वं कथमिति । समाधीयते-'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेन द्वित्वभिन्ने कार्ये कर्तव्ये पूर्वदृष्ट्या परासिद्धत्वं द्वित्वे कर्तव्ये तु श्चुत्वं सिद्धमेवेति भावः।

दम्” इति सूत्रेणाऽस्मनेऽदं कथं न स्यादिति चेन्न। (१)ङित्वस्य प्रत्ययाप्रत्ययोभयवृत्तित्वेन प्रत्ययलक्षणसूत्राप्रवृत्तेः। यो हि धर्मः केवलप्रत्यये तिष्ठति तस्यैव धर्मस्य प्रत्ययलक्षणेनानयनं भवति यश्च धर्मः प्रत्ययेषु वर्तते, अथ च धातुष्वपि वर्तते तस्य धर्मस्यानयनं न भवति। ङित्वधर्मश्च यङादिप्रत्ययेषु वर्तते, अथच शीङादिधातुष्वपि वर्तते, इति तस्य धर्मस्यानयनं न भवतीति सारांशः।

अत एव शोभना दृषदः यस्मिन् प्रासादे इति विग्रहे प्रत्ययलक्षणेनासन्तत्वमादाय “अत्वसन्तस्य” इति दीर्घोऽपि न भवतीति। असन्तत्वस्योभयेऽष्वपि विद्यमानत्वात्।

“भूसुवोस्तिङि” इति गुणनिषेधे सिद्धे “बोभूतु” इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति नियमं करोति। एवञ्च यदि भाषायां यङ्लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति। न च द्वित्वे बोभू इति समुदाये भूधातोरभावेन “भूसुवोस्तिङि” इति सूत्राप्राप्तौ गुणाभावो निपातनीय एवेति वाच्यम्। षष्ठाध्यायीस्थसूत्रेण यद्द्वित्वं भवति तत्पुनरपि(२)तस्यैवोच्चारणं भवति, न तु नवीनस्य द्वितीयस्य सूशब्दस्य ‘द्विःप्रयोगो द्विर्वचनं षाष्ठम्’ इति सिद्धान्तात्॥ २०१॥

## यकारवकारान्तानां यङ्लुङ् नास्ति।

अयम्भावः—“च्छ्वोः” इति सूत्रे क्ङितिग्रहणमनुवर्तते नवेति विचारे भाष्यकृता यदि क्ङितिग्रहणमनुवर्तते तदा प्रष्टा(३) प्रष्टुमित्यादौ “च्छ्वोः” इति सूत्राप्रवृत्तौ षत्वार्थं “व्रश्च” इति सूत्रे छकारग्रहणं कर्त्तव्यं। अथ च यदि नानुवर्तते तदा पूर्वोक्तसूत्रेण छकारस्य शकारे शान्तत्वादेव षत्वसिद्ध्या “व्रश्च” इति सूत्रे छकारग्रहणं न कर्तव्यं भवतीत्येतावानेव विशेष इत्यभिहितम्॥

इत्थञ्च यदि वान्तधातुभ्यो यङ्लुक् भवति तदा दिवु धातोर्यङ्लुकि इडभावपक्षे क्ङिति ग्रहणानुवृत्तौ ऊठोऽभावे देदेति देदेषीतिरूपम्। अथ च यदि क्ङितिग्रहणस्य नानुवृत्तिस्तदा ऊठि देद्योति देद्योषीतिरूपम्। एवं यान्तानामपि प्रयोगे भेदो बोध्यः। ततश्च प्रयोगेष्वपि भेदो वर्तते इति ‘एतावानेव विशेष’ इति भाष्यनियमो निष्फलो भवतीति तस्मात् भाष्यनियमाद् “यकारवकारान्तानाम्’ इत्यादिवचनं निस्सृतम्। परञ्चैतद्यङ्लुङ्निवर्तनं वान्तांशे यत्र “च्छ्वोः” इत्यूठ् भवति तद्विषयकम्। “ज्वरत्वर”इत्यादिसूत्रेण यत्रोठ भवति तत्र यङ्लुग् भवत्येवेति युक्तम्। माधवादीनां सम्म-

---

(१) ङित्वस्येति। न चायमनुबन्धनिर्देशः इति शङ्क्यम्। श्तिपानिर्देशादिसाहचर्येण यदीयानुबन्धनिर्देशस्तत्प्रकृतिकयङ्लुगन्ते तस्याप्रवृत्तिरित्यर्थस्य स्वीकारादिति भावः। (२) तस्यैवोच्चारणमिति। ‘प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्’ इति परिभाषयेति भावः। (३) प्रष्टेत्यादाविति। न च प्राड् इत्यत्र सोर्लोपे षत्वार्थं छग्रहणमावश्यकमिति वाच्यम्। क्विब्निमित्तशादेशस्य दुर्वारत्वात्। विचोऽसार्वत्रिकत्वाच्चेति भावः।

त्र । "च्छ्वोः" इतिसूत्रे भाष्यकारेण विचारः कृतस्तत्रैव च ऊठि कृतेऽकृते वा फलभेदो भवतीति तत्सूत्रविषयके ऊठ्येव यङ्लुङ् नेति सारांशः ॥ २०२ ॥

इति यङ्लुगन्तप्रक्रिया ।

# अथ नामधातुप्रक्रिया ।

## अवगल्भाश्च ।

नचात्र क्विप्प्रत्ययसन्नियोगेनाच्प्रत्ययस्यानुनासिकत्वादिनिपातनाद् गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन आम् न स्यादिति वाच्यम् । 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रियत' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात् । उक्तवचने प्रमाणञ्च "आचारेऽवगल्भ" इत्यादिवार्तिकमेव । नचाचारेऽर्थे ऽवगल्भते इत्यादावात्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम् । "धातूनामनेकार्थः" इतिवचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनादवगल्भते इत्यादौ (१)तङः सिद्धत्वात् । वार्तिके ऽवोपसर्गविशिष्टपाठसामर्थ्येन केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च गल्भादिधातोः क्यङेव भवतीति माध(२)वादयः ।

परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि आव्यम् । किन्तु अवोपसर्गरहितेभ्यो गल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्येव वक्तुं युक्तम् । वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः । आत्मनेपदं तु गौणफलमितितत्त्वम् ॥ २०३ ॥

## उपसर्गसमानाकारम् ।

अयमाशयः—युद्धे योऽयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावात्सङ्ग्रामशब्दस्य लाभात् "तत्करोति"इत्यादिना णिचि सङ्ग्रामयते इत्यादिसिद्धौ चुरादौ 'संङ्ग्राम युद्धे, इति संविशिष्टग्रामशब्दो व्यथाभूय "उप(३)सर्गसमानाकारम्" इत्यादिवचनं ज्ञापयति । तेन स्वमनायतेत्यादौ सुपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्त-

---

(१) तङः सिद्धत्वादिति । "सर्वप्रातिपदिकेभ्यः" इति वार्तिकेन प्रातिपदिकमात्रात् क्विप् विधीयते इति अवगल्भादपि अनेन क्विपि सिद्धे तत्सन्नियोगेनानुदात्तत्वानुनासिकत्वमात्रमच्प्रत्ययस्य "आचारे अवगल्भ" इत्यवगल्भादिषु प्रतिज्ञायते । लाघवादन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि परस्मैपदमेव भवति न तु तङिति भावः। (२) माधवादय इति । तेषामाशयस्तु "आचारे अवगल्भ" इत्यत्र सुप इत्यनुवर्तते। तथाच—केवलोपसर्गान्तरविशिष्टादवगल्भादिसुबन्तात्क्यङेव न तु क्विबिति। (३) उपसर्गेति । 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति वचनमत्र समानाकारमिति क्रियायोगाभावादुपसर्गो नेत्यभिप्रायेणेति भावः।

त्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणन्न भवति। ततश्च ओढ इवाचर्यति विग्रहे आङः पृथक्करणाभावेनाव्ययपूर्वपदत्वाभावाल्ल्यप् न भवतीति फलम्। ज्ञापकस्य विशेषापेक्षत्वे-'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः" इति वार्तिकं तत्प्रत्याख्यानपरकम् "आटश्च" इति सूत्रे चकारग्रहणञ्च प्रमाणम्। अन्यथा—औढीयदित्यादौ धातुसंज्ञायां कर्त्तव्यायामाङः पृथक्करणेन—'ओमाङोश्च" इति सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव। एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम्। "आटश्च" इति सूत्रे चकारग्रहणम् "अटश्च" इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्तत्सर्वं निवारयतीति चकारग्रहणेनैव पररूपञ्च स्यादिति वार्तिकं निष्प्रयोजनमिति वार्तिकं प्रत्याख्यातं भगवता ॥ २०४ ॥

## वृद्धौ सत्यां टिलोपः।

अयमाशयः—"वृद्धेर्लोपो बलवान्" इति भाष्यवचनात्पूर्वं टिलोपे अग्लोपित्वाद्दीर्घसन्वद्भावयोरभावात् 'अजहलत्, अचकलत्' इति रूपद्वयसिद्धौ "हलिकल्योरदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय वृद्धौ सत्यां टिलोपो भवतीति वचनं ज्ञापयति। इत्थञ्च स्वांशे चरितार्थं फलञ्च—अपीपटत् अपपटदितिरूपद्वयसिद्धिः, पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो भवति। हलिकल्योरदन्तत्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोप इति पक्षः सिद्धो भवति। एवञ्च प्रमाणद्वयेन मतद्वयं सिद्धम्भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति सारांशः ॥ २०५ ॥

## स्वादयति।

"मपर्यन्तस्य" इत्यधिकारात् "प्रत्ययोत्तरपदयोश्च" इति सूत्रेण त्वादेशेऽन्त(१)रङ्गत्वात्पूर्वम् "अतो गुणे" इति पररूपे ततः "प्रकृत्यैकाच्" इतिटिलोपनिषेधे वृद्धौ च सत्यां(२)तत्सिद्धिः। नच "प्रकृत्यैकाच्" इति सूत्रस्योदाहरणं वार्तिककारेण प्रेष्ठः प्रेयानीति दत्तम्। तच्चोदाहरणं भाष्यकारेण टिलोपे कर्त्तव्ये "असिद्धवदत्राभात्" इति सूत्रेण प्रादेशस्यासिद्धत्वात्, प्रादेशेऽकारोच्चारणसामर्थ्याच्चेति हेतुद्वयेन साधितम्। एवञ्च "प्रकृत्यैकाच्" इति सूत्र भाष्ये प्रत्याख्यातमिति वाच्यम्। प्रेष्ठत्यादिप्रयोगोऽन्यथा सिद्धो न तु "प्रकृत्यैकाच्" इति सूत्रस्य मुख्योदाहरणमित्येव तद्भाष्याशयात्। मुख्योदाहरणं तु त्वादयतीत्यादयः। वार्तिककारोक्तोदाहरणं त्वन्यथासिद्ध भवतीत्येव भाष्यतात्पर्यं नतु तत्सूत्रमेव न कर्तव्यमिति तत्प्रत्याख्याने तात्पर्यमिति भावः ॥ २०६ ॥

---

(१) **अन्तरङ्गत्वादिति**। न च "वार्णादाङ्गं बलीयः" इति टिलोपस्यैव प्रवृत्तिरुचितेति वाच्यम्। व्याश्रयत्वात्। (२) **तत्सिद्धिरिति**। त्वादयति सिद्धिरिति भावः। परे तु त्वापयति, 'मापयति' इत्येवाहुः। वार्णपरिभाषा व्याश्रयेऽपि 'इयाय' इत्यादौ प्रवर्तते, तस्या अनित्यत्वे दृढतरमानाभावः इति भावः।

## शावयति।

अयम्भावः-श्वानमाचष्टे इति विग्रहे "नस्तद्धिते" इति टिलोपे (१)सम्प्रसारणे वृद्धौ सत्यां च तत्सिद्धिः। नचात्र "प्रकृत्यैकाच्" इति प्रकृतिभावे टिलोपो न स्यादिति वाच्यम्। "येन (२) नाप्राप्तिन्यायेन" "टेः" इत्यस्यैव बाधकत्वात्। यत्र यत्र "प्रकृत्यैकाच्" इति सूत्रं प्रवर्तते तत्र तत्र "नस्तद्धिते" इति सूत्रं न प्रवर्तते। "टेः" इति सूत्रं तु—यत्र यत्र "प्रकृत्यैकाच्" इति प्रवर्तते, तत्र तत्र सर्वत्रैव प्रवर्तते, इति "टेः" इत्यस्यैव बाधकं सूत्रम्। प्रेष्ठेत्यादौ "प्रकृत्यैकाच्" इति सूत्रविषये "नस्तद्धिते" इति न प्रवर्तते "टेः" इति सूत्रन्तु प्रवर्तत एवेति तत्वम्। इष्ठनि यद्यत् सूत्रं प्रवर्तते तस्यैव तस्यैव सूत्रस्यातिदेशो भवति। इत्थञ्च ब्रह्मिष्ठ इत्यादौ परत्वात् "टेः" इत्यनेनैव टिलोपः सिद्धो भवतीति "नस्तद्धिते" इति सूत्रस्य तत्राप्रवृत्तिः। तथा च "नस्तद्धिते" इति सूत्राप्रवृत्तौ शुनयतीत्येवरूपं भवतीति केषाञ्चिन्मतम्॥ २०७॥

## तिराययति।

तिर्यञ्चमाचष्टे इति विग्रहे णिचि टिलोपे तिर्यादेशे वृद्धौ च सत्यां तत्सिद्धिः। नचात्र टिलोपेनाञ्चधातुत्वाभावात्कथं तिर्यादेश इति वाच्यम्। "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया तिर्यादेशे कर्त्तव्ये टिलोपस्यासिद्धत्वेन अञ्चधातुत्वसत्त्वात्। न च तिर्यादेशे कृते पुनष्टिलोपः स्यादिति वाच्यम्। यथाऽपाचितरामित्यत्र "असिद्धवदत्राभात्" इति सूत्रेण प्रथमतलोपस्यासिद्धत्वेन तरब्घटकतकारस्य पुनश् "चिणो लुक्" इति सूत्रेण लुङ् न भवति। तथाऽत्रापि प्रथमटिलोपस्यासिद्धत्वेन भूयष्टिलोपाभावात्। (३)अथवा "अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्" इति परिभाषया टिलोपाभावो बोध्यः॥ २०८॥ इति नामधातुप्रक्रिया।

---

# अथ कण्ड्वादयः।

## द्विधा कण्ड्वादयः।

अयम्भावः—'कण्डूञ् गात्रविघर्षणे, इति धातौ कण्डु इति ह्रस्वान्त एव पठितव्यः। तथाच—"अकृत्सार्वधातुकयोः" इति दीर्घे कण्डूयते इति रूपसिद्ध्या दीर्घान्तपाठो ज्ञापयति—"कण्ड्वादयः प्रातिपदिकाः" इति।

अथ च यदि कण्ड्वादयः प्रातिपदिकास्तदा "कण्ड्वादिभ्यो यग्" इति सूत्रे

---

(१) सम्प्रसारण इति। नचात्र टिलोपे सति अन्नन्तत्वाभावात् 'श्वयुवमघोनामतद्धिते' इत्यनेन कथं सम्प्रसारणमिति वाच्यम्। स्थानिवद्भावात् "असिद्धवदत्राभात्" इत्यनेनासिद्धत्वाद्वा टिलोपेऽपि अन्नन्तत्वलाभादिति बोध्यम्। (२) येननेति। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेनेति केचित्। (३) अथवेति। चिणोलुङ्न्यायस्यानित्यत्वादाह।

ककारोपादानं व्यर्थमेव तदेव व्यर्थं सत् (१)'कण्ड्वादयो धातवः' इति ज्ञापयति। इत्थञ्च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्चेत्युभयं सिद्धम्भवति। तेन क्विपि कृते धातुत्वादुवङि कण्डुवौ कण्डुव इति, प्रातिपदिकत्वे तु यणि कण्ड्वौ कण्ड्व इति च द्विविधरूपसिद्धिः फलम्। ककारोपादानस्य गुणनिषेधः फलम्। गुणश्चार्धधातुकत्वमाश्रित्य प्राप्स्यति। अत्र तु यकः प्रातिपदिकेभ्यो विहितत्वेनार्धधातुकत्वात् "सार्वधातुकार्धधातुकयोः" इतिसूत्राप्रवृत्तौ गुणनिषेधार्थं कित्करणं विफलमिति सारांशः॥ २०९॥ इति कण्ड्वादयः।

---

# अथात्मनेपदप्रक्रिया।

## कथं तर्हि आजघ्ने विषमविलोचनस्य वक्षः।

अयम्भावः—भागवृत्तिमतेऽसाधुरेवायं प्रयोगः। अथ च महतामुक्तौ दोषारोपणन्न कार्यमिति शिष्टाचारेण विषमविलोचनस्य वक्षः प्राप्य आजघ्ने इति रघूत्तमं प्राप्य मा आहध्वमिति च (२)व्याख्यानेन हन् धातोरकर्मकत्वात्प्रयोगः साधुः। न च प्राप्येत्यध्याहारे श्वसुराज्जिह्रेतीतिवत्त्रापि कर्मणि पञ्चम्या भाव्यमिति वाच्यम्। ल्यबन्तं विनैव यत्र ल्यबन्तार्थप्रतीतिस्तत्रैव "ल्यब्लोपे कर्मण्यधिकरणे च" इति वचनस्य प्रवृत्तत्वात्। अत्र तु ल्यबन्तं विना ल्यबन्तार्थभानं न भवति प्रत्युत मारणमेव प्रतिभातीति तस्याविषयत्वमिति सारांशः।

अथवा वक्षो भेत्तुम् रघूत्तमं भेत्तुमिति तुमुन्नन्ताध्याहारेण प्रयोगद्वयस्य साधुत्वम्। यथा लोके मल्लोऽतिहर्षात्स्वस्यैव वक्षस्ताडयति तथा विषमविलोचनस्य समीपमेत्य स्वकीयमेव वक्षः आजघ्ने, आस्फालयाञ्चक्रे इति व्याख्यानेनापि आजघ्ने इति प्रयोगस्य साधुत्वम्॥ २१०॥

## दर्शयते भवः।

अयम्भावः—पश्यति भव इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भव इति चतुर्थकक्षायामुच्यते। एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धम्भवति। एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि बोध्यम्। अथवा पश्यन्ति भवमारोहन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणः हेतुत्वारोपाण्णिचि दर्शयति भवः आरोहयति हस्तीति। ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति।

---

(१) कण्डवादयो धातव इति। 'धातोरेकाच' इति सूत्राद्धातोरित्यनुवर्तनादपि कण्ड्वादेर्धातुत्वं बोध्यम्। अनुमीयते चात्र—कण्डवादयः-भ्वादिपठिताः, धातुप्रकृतिककार्योद्देश्यत्वात्। (२) व्याख्यानेनेति। अध्याहाररूपेणेति भावः। 'वाक्ये वाक्यैकदेश प्रयोगः' इति न्यायेन प्राप्य इत्यस्याध्याहार इति भावः।

नच भवरूपकर्मणः कर्तृत्वाद् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम्। अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानाश्रयत्वाभावात्। तृतीयकक्षायां तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियत्वात्तङ् सिद्धः। न च तृतीयकक्षायामपि चाक्षुषज्ञानविषयीकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम्। एवकारेणाधिकांशस्यैव निस्सारितत्वात्। नवणीक्रियाऽपेक्षया ण्यन्तक्रियायामाधिक्यन्न स्यान्न्यूनतायां सत्यामसत्यां वा न कापि हानिरिति सारांशः ॥ २११ ॥ इत्यात्मनेपदप्रक्रिया।

# अथ परस्मैपदप्रक्रिया।

## अनुकरोति।

न च कर्मकर्त्तरि "अनुपराभ्यां कृञः" इति सूत्रेण परस्मैपदं स्यादिति वाच्यम्। कार्यातिदेशपक्षे "कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रेणात्मनेपदं विधीयते। ततश्च परेण "कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रेणास्य सूत्रस्य बाधेन परस्मैपदासिद्धेः। शास्त्रातिदेशपक्षेऽपि 'कर्त्तरि कर्मव्यतिहारे" इत्यतः "शेषात्कर्तरि परस्मैपदम्" इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्य मुख्यकर्तर्येव परस्मैपद भवति, न तु गौणकर्त्तरि इति परस्मैपदाभावः। (१) शास्त्रातिदेशपक्षे "अनुपराभ्यां कृञः" इति सूत्रेण "भावकर्मणोः" इति सूत्रस्यैव बाधे परस्मैपदं दुर्वारम् ॥ २१२ ॥ इति पदव्यवस्था ॥

# अथ भावकर्मप्रक्रिया।

## शामिता।

नचात्रामन्तत्वान्मित्संज्ञायां "मितां ह्रस्वः" इति ह्रस्व एव विकल्प्यतां किं दीर्घग्रहणगौरवेणेति वाच्यम्। ण्यन्ताण्णौ ह्रस्वविकल्पे कर्त्तव्ये णिचो लोपस्य स्थानिवद्भावेनोपधायां मकारस्य विद्यमानत्वाद्ध्रस्वविकल्पासिद्धेः। दीर्घविकल्पे तु "न पदान्त" इति सूत्रेण दीर्घे कर्त्तव्ये स्थानिवद्भावस्य निषेधाद्दीर्घः सिध्यति। भाष्यकृता तु "पूर्वत्रासिद्धे न स्थानिवत्" इति वचनमाश्रित्य "न पदान्त" इति सूत्रे द्विर्वचनादिग्रहण "चिण्णमुलोः" इति सूत्रे दीर्घग्रहणञ्च प्रत्याख्यातम्। नच दीर्घग्रहणे प्रत्याख्याते कथितदोषस्य निवारणन्न स्यादिति वाच्यम्। णेर्जातित्वनिर्देशेन दोषस्य गतत्वात। लोपस्य स्थानिवद्भावे जातेऽपि पूर्वस्मिन् णिचि परे उपधायां दीर्घत्वं वर्तत एवेतिभाष्यकाराशयः। परञ्च सति दीर्घग्रहणे यङन्ताच्चि-

(१) शास्त्रातिदेशपक्षे 'कर्मवत्कर्मणा'—इत्यनेनात्मनेपदं न विधीयते किन्तु तद्विधायकं "भावकर्मणोः" इति शास्त्रमतिदिश्यते इत्यत आह—शास्त्रातिदेशपक्ष इति।

ञ्वदिटि शंशामितेत्यत्र दीर्घो भवति, प्रत्याख्याने तु यङोऽल्लोपस्य स्थानिवत्त्वेन दीर्घो न स्यादिति फलभेदः समायाति। अथवारम्भप्रत्याख्यानयोः फलैक्ये प्रत्याख्यानं शोभनं भवतीति शंशामितेति प्रयोगसिद्धयर्थं (१) दीर्घग्रहणं कर्त्तव्यमेव ॥२१३॥

इति भावकर्मप्रक्रिया।

# अथ कर्मकर्तृप्रक्रिया।

## पच्यते ओदनेन।

ननु देवदत्त ओदनं पचति पचतो देवदत्तस्यौदनेन स्वयमेव पच्यते इत्यत्र भावे लकारे कर्तुरनभिहितत्वेन "कर्मवत्कर्मणा" इत्यतिदेशादनभिहिते कर्मणि द्वितीया स्यादिति चेन्न। मूलोक्तरीत्या (२)लकारवाच्यस्यैव कर्तुः कर्मवद्भावात्। भावे लकारे तु लकारवाच्यो भावो वर्त्तते नतु कर्तेति कर्मवद्भावाभावान्न द्वितीया। यगात्मनेपदञ्च "भावकर्मणोः" "सार्वधातुके यक्" इति सूत्राभ्यां सिद्धम्। न च 'पच्यते ओदनो, 'भिद्यते' काष्ठम्' इत्यादौ लकारवाच्यः कर्त्ता वर्तत इति कर्मवद्भावात्कर्मणि यद्यत्कार्यं भवति तत्तत्कर्मकर्त्तर्यपि स्यादिति तव्यादिप्रत्ययोऽपि स्यादिति वाच्यम्, लकारवाच्यो यः कर्त्ता तस्य लान्तकार्ये एव कर्मवद्भावात्, लान्तस्य कार्यञ्च यगात्मनेपदादि। अत एव भेत्तव्यं कुसूलेन स्वयमेवेत्यत्र कुसूलरूपकर्मकर्त्तरि तव्यप्रत्ययो न, किन्तु भावे एव। इत्थञ्च भिद्यते कुसूल इत्यादौ च द्वितीयापि न भवति। कर्मणि लकारे भिद् ल् इति दशायां यद्यत्कार्यं भवति तत्तत्कर्मकर्त्तर्यपि स्यात्, कुसूलरूपकर्म तु लान्तभागाद् भिन्नमस्तीति कृत्यप्रत्ययस्तत्र दुर्लभः॥ २१४॥

## तपस्तपःकर्मकस्यैव।

अयम्भावः—उपवासादिरूपतपस्तापसं तपति दुःखीकरोतीत्यर्थः। एवञ्च तापसस्य कर्मत्वे तप्धातोर्दुःखजननमर्थः। तापसः स्वयमेव तप्यतेऽर्थात्तप अर्जयतीति तापसस्य कर्तृत्वे तपेरर्जनरूपार्थस्तथाच कर्मस्था क्रिया दुःखजननरूपा कर्तृस्था क्रिया तु अर्जनरूपेति क्रियाभेदात्सकर्मकत्वाच्चाप्राप्ते कर्मवद्भावे "तपस्तपःकर्मकस्य" इति सूत्रं विध्यर्थम्। एवकारस्तु व्यर्थ एवेति वृत्त्यनुसारिणो वदन्ति।

---

(१) दीर्घग्रहणं कर्तव्यमिति। तेन अहिडि अहीडि इति सिद्धम्भवति। तथाहि—हेड् अनादरे घटादिः, "मितां ह्रस्व" इति ह्रस्वे कर्तव्ये एव इक्, अत्र हिडयति। अत्र चिण्णमुलोः कृतयोः ह्रस्वे विकल्प्यमाने अहिडि अहेडि इति स्यात्। दीर्घे तु अहिडि अहीडि इति भवतीति भावः। (२) लकारवाच्यस्यैवेति। "व्यत्ययो बहुलं लिङ्याशिष्यङ्" इति द्विलकाराल्लत्यनुवृत्तेरुक्तार्थलाभ इति भावः।

वस्तु(१)तस्तु कर्मत्वकर्तृत्वरूपावस्थाद्वयेऽपि तापस उपवासादिजन्यकुशलादिरूपशरीरसन्तापमनुभूय पुण्यविशेषमर्जयतीति कर्मस्था क्रिया कर्तृस्था क्रिया च समानेति कर्मवद्भावे प्राप्ते 'सकर्मकाणां कर्मवद्भावश्चेत्तर्हि तपेरेव' इति नियमार्थं सूत्रम् । इत्थञ्च 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकमपि न कर्तव्यं भवति । एवञ्च नियमेनैव एवकारे लब्धे सूत्रे एवकारग्रहणं व्यर्थं सत् तप्धातोरपि कर्मवद्भावश्चेत्तर्हि तपःकर्मकस्यैवेति द्वितीयनियमं करोति । तेन सुवर्णमुत्तपतीत्यादौ कर्मवद्भावो न भवतीति फलम् ॥ २१५ ॥ इति कर्मकर्तृप्रक्रिया ।

# अथ लकारार्थप्रक्रिया ।

## वसन् ददर्श ।

अयमाशयः—ददर्शेति भूतकालिकक्रियादर्शनेन तद्योगे वसन्नित्यत्र भूतकाले लट् भवति । एवं भवितेति भविष्यत्कालिकक्रियायोगे सोमयाजीत्यत्रापि भविष्यदर्थे णिनिः । अन्यथा "करणे यजः" इत्यनेन भूतार्थे विहितो णिनिर्भविष्यदर्थे दुर्लभः स्यात् । नच वसन् इति वर्तमानक्रियादर्शनेन ददर्शेति वर्तमाने लिडेव स्यादिति वाच्यम् । तिङ्वाच्यक्रियायाः प्राधा(२)न्येन गुणभूतक्रियायामेव विपर्ययात् ॥२१६॥

## याहि(३)याहि ।

अतिशयेन पुनः पुनर्वा यातीति–याहि याहीति याति । अतिशयेन पुनःपुनर्वा यातः इति–याहि याहीति यातः । अतिशयेन पुनःपुनर्वा यान्तीति–याहि याहीति यान्ति । अतिशयेन पुनः पुनर्वा यासीति—याहि याहीति यासि । अतिशयेन पुनः पुनर्वा याथः इति–याहि याहीति याथः । अतिशयेन पुनः पुनर्वा याथेति–याहि याहीति याथ । यात यातेति वा याथ । अतिशयेन पुनः पुनर्वा यामीति–याहि याहीति यामि । अतिशयेन पुन पुनर्वाः यावः इति–याहि याहीति यावः । अतिशयेन पुनः पुनर्वा यामः इति–याहि याहीति यामः । एवमात्मनेपदेष्वपि ध्वंविषये ज्ञेयम् ॥ २१७॥

इति लकारार्थप्रक्रिया ।

# अथ पूर्वकृदन्तकृत्यप्रक्रिया ।

## अचो यत ।

अयम्भावः—हलन्तेभ्यो ण्यत्प्रत्ययस्य विशिष्य विधानं भवतीति विशेषविहि·

(१) वस्तुतस्त्विति । पूर्वोक्तेऽरुचिबीजं तु कक्षाद्वयेऽपि कर्मकर्तृवृत्तिक्रियायास्तुल्यत्वमिति भावः । (२) प्राधान्येनेति । प्रधानानुरोधेन गुणस्य नयनमुचितं न तु विपरीतमिति भावः । (३) याहि याहीति । "क्रियासमभिहारे द्वे वाच्ये" इत्यनेनात्र द्वित्वं बोध्यम् । पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थ इति भावः ।

त्वेन ण्यत्प्रत्ययो यत्प्रत्ययस्यापवादो भविष्यतीति, अर्थादेवाजन्तेभ्यो धातुभ्योऽच् प्रत्ययः स्यादिति सूत्रेऽज्ग्रहणं न कर्त्तव्यम्। एवञ्चाज्ग्रहणे(१)प्रत्याख्याते यद्ग्रहणमपि "तव्यत्तव्यानीयरः" इति सूत्रे एव कर्त्तव्यम्। नचाज्ग्रहणाभावे "वाऽसरूपोऽस्त्रियाम्" इति परिभाषया ण्यत्प्रत्ययाभावपक्षे हलन्तेभ्योऽपि धातुभ्यो यत्प्रत्ययप्रसङ्गः स्यादिति वाच्यम्। "नानुबन्धकृतमसारूप्यम्" इति परिभाषया ण्यद्यतोः सरूपत्वात्। द्वयोः प्रत्यययोः समानरूपत्वेन "वाऽसरूप" इति सूत्राप्रवृत्तिरिति सारांशः॥ २१८॥

## इचेति ह्रस्वः सुपठः।

अयमाशयः—भाष्यकृता एकमात्रालाघवेन दीर्घोच्चारणं प्रत्याख्यातम्। न च ह्रस्वपाठे "षत्वतुकोरसिद्धः" इति सूत्रेणैकादेशस्यासिद्धत्वात्तुकः प्राप्तिरिति वाच्यम् पदा(२)न्तपदाद्योः स्थाने य एकादेशस्तस्यैवासिद्धत्वात्। अत्र तु एकस्मिन्नेव पदे आदेशः। एवञ्च दीर्घोच्चारणम् इह इति इकारद्वयप्रश्लेषेण परत्वात्प्राप्तस्य "ये विभाषा" इत्यात्वस्य बाधनार्थमिति भाष्यविरुद्धकल्पना व्यर्था। यतः क्यपा सह विधीयमानस्येत्वस्यान्तरङ्गत्वेन यकारादौ प्रत्यये परे विधीयमानस्याऽऽत्वस्य बहिरङ्गत्वात्। परत्वस्याशुक्तत्वात्॥ २१९॥

## कथं भार्यावधूः।

ननु "भृञोऽसंज्ञायाम्" इति सूत्रे भार्याः क्षत्रिया इति पुंलिङ्गे संज्ञायां क्यपोऽभावं कुर्वंस्तच्चरितार्थमिति स्त्रीलिङ्गे संज्ञायां न प्रवर्तिष्यते इति भार्यावधूरित्यत्र "संज्ञायां समजनिषत्" इत्यादिना क्यपा भाव्यमिति चेन्न। 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया डुभृञ् धारणपोषणयोरित्यस्माज्जुह्वत्यादिपठितदीर्घान्ताद् भृ भरणे इत्यस्माद् वा ण्यत्प्रत्ययस्य सिद्धत्वात्। "संज्ञायां समज" इत्यादिसूत्रे ह्रस्वान्तभृञ्धातोः पाठेन दीर्घान्तभृधातुविषये तत्सूत्राप्रवृत्तिः। डुभृञ्धातौ अनुबन्धद्वयं वर्तते, भृञ्धातौचैकानुबन्धो वर्तते, इति डुभृञ् धातुविषयेऽपि तत्सूत्राप्रवृत्तिः॥ २२०॥

## नकादेः।

अयमाशयः—वार्त्तिककारः "चजोः" इति सूत्रे निष्ठायां ये धातवोऽनिटो भवन्ति तेषामेव कुत्वं भवतीति व्याख्याय "न क्वादेः" इति सूत्रं प्रत्याचख्यौ। ततश्च

---

(१) प्रत्याख्याते इति। ननु अज्ग्रहणसत्त्व 'दित्स्यम्' 'धित्स्यम्' इत्यादौ यति सन्निपातपरिभाषया "अतो लोपः" न प्राप्नोति। तदकरणे तु प्राप्नोतीति फलभेदः इति चेन्न। सन्निपातपरिभाषाया अनित्यत्वात्। (२) पदान्तपदाद्योरिति। अन्यथा वृक्षे छत्र मित्यत्र छावादगुणस्यासिद्धतया 'छेच' इति ह्रस्वाश्रयो नित्यस्तुक् स्यात्। इष्यते तु "दीर्घात्पदान्ताद्वा" इति वैकल्पिक इति भावः।

गर्जितर्जिप्रभृतीनां निष्ठाविषये सेट्त्वात्कुत्वन्न भवति मुचुग्लुचुप्रभृतीनां तु उदित्वेन "उदितो वा" इति सूत्रेण क्त्वायां वेट्त्वात् "यस्य विभाषा" इति सूत्रेण निष्ठाविषये इडागमो न भवतीति "चजोः" इत्यनेन कुत्वं भवति।

इत्थञ्च "नकादेः" इति सूत्रसत्तायां ग्रुचुप्रभृतीनां धातूनां कुत्वन्न भवति, सूत्राभावे तु कुत्वं प्राप्नोतीति द्वयोर्मते प्रयोगेषु प्राप्तमपि वैलक्षण्यं "यथोत्तरं(१)मुनीनां प्रामाण्यम्" इतिवचनेन स्वीकर्त्तव्यम्। एवञ्च वार्तिकमतमेव ज्याय इति सारांशः॥२११॥

## लोटा बाधो(२)माभूत्।

अयमाशयः—"वाऽसरूपोऽस्त्रियाम्"इति परिभाषया लोट् कृत्यसंज्ञकप्रत्ययश्च पर्यायेण भविष्यतीति "प्रैषादि"सूत्रे कृत्यग्रहण(३)स्त्र्यधिकारादूर्ध्वं"वाऽसरूपोऽस्त्रियाम्" इति सूत्रं क्वचिन्न प्रवर्तते इति ज्ञापयति। एवञ्च क्तल्युट्तुमुन्खलर्थेषु मिथो बाध्यबाधकभावो न भवतीति वचनं सिद्धम्। तेन हसितं हसनमिति भावे विहितयोः क्तल्युट्प्रत्यययोर्विषये "भावे" इति सूत्रेण घञ्प्रत्ययो न भवति। अथ च ईषत्पान इति खलर्थे खल्प्रत्ययश्च न भवतीति फलम्बोध्यम्। लाघवात् "शकि लिङ् च" इतिसूत्रे च कारग्रहणेनैव पूर्वोक्तज्ञापनसम्भवे प्रैषादिसूत्रे कृत्यग्रहणन्न कार्यमिति सारांशः॥२२२॥

## कथं लोध्रद्रुम सानुमतः प्रफुल्लम्।

ननु "अनुपसर्गात्फुल्लक्षीब" इत्यादिनोपसर्गाभावे निष्ठाऽवयवतकारस्य लत्वं निपात्यते। अत्र तूपसर्गसत्त्वेन लत्वनिपातनं दुर्लभमितिचेन्न। 'फुल्ल—विकसने' धातोः पचाद्यचि सति रूपस्य सिद्धत्वात्। नचैवं सत्युपसर्गे फुल्लधातोः रूपसिद्धौ सूत्रं व्यर्थमेवेति वाच्यम्। उपसर्गाभावे फुल्ताद्यनिष्टवारणेन सूत्रस्य सफलत्वात्। इत्यर्थं। च फुल्लवानितिरूपसिध्यर्थञ्च "अनुपसर्गात्फुल्लक्षीब" इत्यादिसूत्रमावश्यकमिति सारांशः॥ २२३॥

## धृष्टः।

अयम्भावः—घृषेरादित्त्वात् "आदितश्च" इत्यनेन शसुधातोश्चोदित्त्वात् "यस्य विभाषा" इत्यनेन सूत्रेणेण्निषेधे सिद्धे "धृषिशसी वैयात्ये" इदं सूत्रमविनये एवैतौ अनिटौ स्तः इति नियमयति। एवञ्चान्यार्थे इटि सति धर्षितः विशसित इति रूपद्वयसिद्धिः फलम्। नच धृषेर्भावादिकर्मणोरर्थयोः प्रत्यये "विभाषा भावादिकर्मणोः"

(१) यथोत्तरमिति। 'यथोत्तरम्' इति वार्तिकस्य सूत्रदूषणाय प्रवृत्तत्वाद्भाष्यकृता च वार्तिकमते 'शोकः' इत्यस्यासिद्धिमाशङ्क्य सूत्रमतेऽपि ण्यति कुत्ववारणाय नियमार्थमावश्यकेन शुचेर्घञि इति वचनेन समाधानाद्वार्तिकमतस्यैवाभ्यनुज्ञानाच्चेति भावः। (२) लोटा बाध इति। लोटस्तत्र विशिष्य विधानादिह प्राप्तो बाधो नेत्यर्थः। (३) स्त्र्यधिकारादिति। अत्र 'स्त्र्यधिकारादूर्ध्वम्' इति अस्त्रियामित्यस्यार्थः। ज्ञाप्यांशस्तु—'वाऽसरूपविधिः क्वचिन्न' इत्येवेति भावः।

इत्यनेन पाक्षिके" इति प्राप्ते तन्निषेधार्थं विध्यर्थमेवास्तु इतिवाच्यम्। (१)वैयात्ये-ऽर्थे भावादिकर्मणोर्धृषेर्विधानाभावात्। एवञ्च नियमार्थमेवेति काशिकाकारमतम्॥ धृषिधातौ आकारग्रहणस्य फलाभावादकरणेन "आदितश्च" इति सूत्राप्रवृत्तौ इटः प्राप्तौ सत्यां तन्निषेधार्थं सूत्रं विध्यर्थमेवेति(२)हरदत्तमतम्। इत्थञ्च वैयात्येऽर्थे इड्रहितप्रयोगोऽन्यत्रार्थे चेट्सहितप्रयोगः सिद्धः।

तथाच—काशिकाकारहरदत्तयोर्मते फलं तुल्यम्भवति। माधवस्तु पाणिनिना आकारग्रहणं कृतमिति भावादिकर्मणोः प्रत्यये जाते विभाषा भावादिकर्मणोः" इति प्राप्तस्येटो निषेधार्थं सूत्रं विध्यर्थमेवेति वदति। तथाच—वैयात्येऽर्थे धृष्टमित्येकं रूपम्। अन्यत्रार्थे च धृष्टम्, धर्षितमितिरूपद्वयं सिद्धम्। अयमेव पक्षो ज्यायान्॥ वैयात्ये भावादिकर्मणोः धृषेः क्तप्रत्ययो न भवतीत्यत्र प्रमाणाभावात्॥ २२४॥

## दत्तः।

नच दत् इति तान्तादेशपक्षे विदत्तमित्यादौ "दस्ति" इति सूत्रेणोपसर्गस्य दीर्घः स्यादिति वाच्यम्। (३)'तकारादौ प्रत्यये परे तद्विधानात्। अत्र तु दकारादिप्रत्ययः। एवं ददिति दान्तादेशे दध् इति धान्तादेशे वा न काप्यनुपपत्तिः। नच दान्तादेशे "रदाभ्याम्" इति नत्वं धान्तपक्षे च "झषस्तथोर्धोऽधः" इति तकारस्य धत्वञ्च स्यादिति वाच्यम्। (४)सन्निपातपरिभाषाविरोधाद्दातुतकारयोस्सम्बन्धेन जायमानो ददादेशो दधादेशो वा तयोः सम्बन्धविघातके नत्वे धत्वे च कर्त्तव्ये कारणं न भवतीति सारांशः।

यदा प्रादय उपसर्गाः सन्ति तदा "अच उपसर्गात्तः"इति तादेशे प्रत्तोऽवत्त इत्यादिप्रयोगाः सिध्यन्ति। अथच यदा प्रादय उपसर्गप्रतिरूपकाः सन्ति।तदा प्रदत्तमवदत्तमित्यादिप्रयोगाः सिध्यन्तीति अवदत्तमित्यादिवचनं निस्सृतमिति तत्त्वम्॥ २२५॥

## यायावरः।

यायायत इति विग्रहे "यश्च यङः" इति वरचि "अतो लोप" इत्यकारलोपे "लोपो व्योर्वलि" इति यलोपे रूपं सिद्धम्। नचात्राल्लोपस्य स्थानिवद्भावेन वलपरत्वाभावाद् यलोपो न स्यादिति वाच्यम्। "न पदान्तद्विर्वचनवरेयलोप"इत्यादिना स्थानिवत्वनिषेधात्। एवमेव अल्लोपस्य स्थानिवत्वेनार्धधातुकत्वमाश्रित्य "आतो लोप-

---

(१) वैयात्य इति। विरुद्धो यातः वियातः-भविनीतः, तस्य भावो वैयात्यमिति॥ (२) हरदत्त इति। अवैयात्ये भावादिकर्मणोरनभिधानात्, वैयात्ये च नियमाभावादित्व-फलं चिन्त्यमिति भावः। (३) तकारादाविति। "यस्मिन् विधिस्तदादावल्ग्रहणे" इति न्यायादयमेवार्थो युक्तः, ननु तान्ते ददादाविति भावः। (४) सन्निपातेति। तर्हि निमित्तीकृत्यविहितो यो दान्ताद्यादेशः, स तकारविघातकनत्वादिविधेर्निमित्तं न भवतीति भावः।

इटि च" इत्याकारलोपोऽपि न शङ्क्यः "वरे लुप्तं न(१)स्थानिवत्" इति निषेधात्॥२२६॥

इति पूर्वकृदन्तप्रक्रिया।

# अथोत्तरकृदन्तप्रक्रिया।

## अर्थग्रहणमस्तिनैव(२)सम्बध्यते।

अयम्भावः—अर्थग्रहणस्य सन्निधौ अस्तिग्रहणं वर्तते इति प्रत्यासत्तिन्यायेन तत्रैव तस्यान्वयो युक्तः। लोकयुक्त्या सिद्धमिदम्। तथाहि—यथा कस्मिंश्चिदध्यापनादेः स्थाने रिक्ते सति तल्लब्धुं दूरस्थाः समीपस्थाश्च सर्वे पुरुषाः प्रयतन्ते, परञ्चान्ततो गत्वा निकटवर्त्तिनः पुरुषा एव तत्स्थानं लभन्ते। तथैव यद्यर्थग्रहणस्य अस्तिना सह सम्बन्धे जाते आकाङ्क्षा निवृत्ता भवति, तदा अन्यपदार्थे तदन्वयप्रयासो व्यर्थः। योग्यतादिविरहात्तत्स्थानं समीपस्थान लभन्त इत्यन्यदेतत्॥ २२७॥

## चः कः इति वक्तव्ये।

अयम्भावः "निवासचितिशरीर" इत्यादि सूत्रे चः कः इत्येव वक्तव्ये आदिग्रहणमादिभूतस्यैव चकारस्य ककारः स्यादिति बोधनार्थम्। तेन यङ्लुकि गोमयानां निकेचाय इत्यत्रादिचकारस्यैव कुत्वं भवति नतूत्तरस्येति॥ २२८॥

## कथं तर्हि अतिसुलभम्।

अयम्भावः—अतिसुलभमित्यादावुपसर्गद्वयसत्त्वेन "न सुदुर्भ्याम्" इतिसूत्राप्रवृत्तौ "उपसर्गात्खल्घञोः" इति सूत्रेण नुम् न शङ्क्यः। स्वत्योः कर्मप्रवचनीयसंज्ञासत्त्वेनोपसर्गत्वाभावात् "उपसर्गात्खल्घञोः" इति सूत्राप्रवृत्तेः। यदा(३)अतेः कर्मप्रवचनीयसंज्ञा भवति, तदा 'सु' इत्येकोपसर्गत्वेन "सुदुर्भ्याम्" इति सूत्रेण नुमो निषेधः। अथ च यदा सोः(४)कर्मप्रवचनीयसंज्ञा भवति, तदोपसर्गात्परत्वाभावेन "उपसर्गात्खल्घञोः" इति सूत्राप्रवृत्तिरित्युभयथाऽपि नुमोऽभावः सिद्धः। एवञ्चोभयोः कर्मप्रवचनीयसंज्ञा भवति॥ २२९॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप्।

ननु "अदो जग्धिर्ल्यप्ति किति" इति सूत्रे ल्यब्ग्रहणाभावेऽपि प्रपूर्वकाद्धातोः क्त्वाप्रत्यये कृते "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति सूत्रेण ल्यबादेशे "अदो जग्धिः" इत्यादिना जग्ध्यादेशे च प्राप्ते "असिद्धं बहिरङ्गमन्तरङ्गे" इति परिभाषया जग्ध्या-

(१) स्थानिवदिति। अत एव ज्ञापकाल्लुप्ताकारस्य द्वित्वम्। तेन यातिरित्यादौ यङन्तात् क्तिनि आतो लोपसिद्धिः। (२) अस्तिनैवेति। मूलकारेण अनन्तरत्वादित्युक्तम्। तत्र प्रमाणञ्च—अस्ति इत्यस्य घिसंज्ञकत्वेन पूर्वनिपाते प्राप्ते तदकरणमूलकव्याख्यानमिति भावः। (३) अतेरिति। "अतिरतिक्रमणे च" इत्यनेनेति भावः। (४) सोरिति। "सुः पूजायाम्" इत्यनेनेति भावः।

देशेनैव भाव्यमिति "अदो जग्धिः" इत्यादिसूत्रे ल्यब्ग्रहणं व्यर्थमेवेति चेन्न। 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते" इति परिभाषाज्ञापनेन ल्यब्ग्रहणस्य सफलत्वात्। तेन प्रधायेत्यादौ(१)हित्वदत्वात्वेत्यादिकार्याणि ल्यब्विषये न भवन्तीति फलस्बोध्यम् ॥ २३० ॥

## मूलकोपदंशं भुङ्क्ते ।

अयमाशयः—ननु मूलकेनोपदंशं भुङ्क्ते इति विग्रहे ल्यबन्तसकर्मकदंशधातुयोगे मूलकस्य शब्दतः कर्मत्वाभावेन मूलकोपदंशयोः सम्बन्धाभावेन सामर्थ्याभावात् "उपदंशस्तृतीयायाम्" इत्यनेन णमुल् प्रत्ययः "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति समासश्चात्र दुर्लभ इति चेन्न। किमुपदश्य भुङ्क्ते इति कर्मणोऽपेक्षायाम्मूलकमुपदश्य भुङ्क्त इत्यर्थेन समायाति कर्मत्वं मूलकस्येति मूलकस्य दंशधातुना सहार्थसम्बन्धस्य सत्वात्। यदि तृतीयायाः शब्दत एवान्वये प्रत्यय इष्यते, तर्हि 'करणे हनः" इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात्। इत्थञ्च तृतीयाग्रहणसामर्थ्येन आर्थसम्बन्ध एवात्रेष्टः। शब्दतस्तु मूलकं भुजिक्रियाम्प्रति करणमेव॥२३१॥ इति उत्तरकृदन्तप्रक्रिया

॥ श्रीविश्वनाथचरणयोः समर्पणमस्तु ॥

नमामीश्वरं शङ्करं भक्तदेहं सदा शङ्करं भक्तिभाजां भवाब्धौ ।
कृपातो मुहुस्तस्य यातः समाप्तिं मनोह्लादयन् भावभव्याकृतीनाम्॥ १ ॥
यो देवदेवस्त्रिपुरारिसंज्ञां लब्ध्वापि दैत्याञ्छतशो जुगोप ।
तं शान्तचित्तं क्षणमेव शान्ता निषेव्य मुक्ताः किमतीव चित्रम् ॥ २ ॥
गतो माधवो माधवो नागतः किं करोमीति काचिद्विषादं जगाम ।
धृतो रागरज्वाश्रितः पक्षिराज झटित्यागतोऽसौ शिवं वः करोतु ॥ ३ ॥

श्रीमतो देवपूर्वस्य नारायणपरस्य च। तथा श्रीरामयशसः आशासे पादपङ्कजम् ॥ ४ ॥
आजमगढेति नाम्नास्ति मण्डलं सुखभाजनम्। तस्यान्तरगतो ग्रामो धाहरेति समृद्धिमान्
तत्र विन्ध्येश्वरीदत्तस्यात्मजो जातवान् किल। नाम्ना रामचरित्रेति पदव्या च त्रिवेदिना॥
भूषितो भूषयन्नङ्घ्रिपरागं विदुषां सदा। चरणे विश्वनाथस्य प्रीतिं वाञ्छसि सस्पृहम्७

समाप्तोयं ग्रन्थः ।

---

(१) हित्वदत्वेति। 'विधाय' इत्यत्र "दधातेर्हिः" इति हित्वन्न। 'प्रदाय' इत्यत्र "दोदद्घोः" इति दत्वन्न। 'प्रखन्य' अत्र 'जनसनखन" इत्यात्वन्न। 'प्रस्थाय' अत्र 'द्यतिस्यति' इतीत्वन्न। 'प्रक्रम्य' इत्यत्र "क्रमश्च क्त्वि" इति दीर्घो न। 'आपृच्छ्य' 'प्रदीव्य' अत्र छकारवकारयोः "च्छ्वोः" इति शूठौ न। इडभावस्योदाहरणं तु प्रखन्य प्रदीव्येत्याद्येवेति भावः।

मध्यमा चारों खण्ड के परीक्षोपयोगी-रूपलेखनप्रकार-पङ्क्तिलेखनप्रकार आदि परिशिष्ट विभूषित—

# सिद्धान्तकौमुदी-बालमनोरमा

इस संस्करण में—सिद्धान्तकौमुदी के जिन २ विषयों की व्याख्या बालमनोरमा टीका में स्पष्टतया प्रतिपादन किया है उन्हीं विषयों को तत्त्वबोधिनी आदि टीकाओं में पिष्ट-पेषण मात्र किया है। इसलिये हमारे योग्य विद्वान् सम्पादक ने अन्य सभी टीकाओं की समालोचना कर जो कुछ अंश जटिल एवं प्राच्य-नव्य मत से विवादग्रस्त परीक्षोपयोगी अवशिष्ट थे ग्रन्थ के अन्त में प्रयोगसाधन-पंक्तिप्रकाशनशैली के रूप में दिखा दिये हैं जिससे "एक पन्थ दो काज" अर्थात् परीक्षा के लेखनशैली का ज्ञान भी विद्यार्थी जान जांयगे और केवल कण्ठस्थ करने पर परीक्षा-महार्णव को भी अनायास से पार करेंगे तथा व्यर्थ अन्य अन्य टीकाओं के कष्ट से इस विकट परिस्थिति में अर्थभार से बच जांयगे। द्वितीय संस्करण। मूल्य कारकान्त प्रथम भाग ३) समासादि द्विरुक्तान्त द्वि० भाग ३) भ्वाद्यादि चुराद्यन्त तृ० भाग ३) ण्यन्तादि समाप्त्यन्त च० भाग ५) पूर्वार्द्ध ६) उत्तरार्द्ध ८) सम्पूर्ण १४)

# मध्यसिद्धान्तकौमुदी

## 'सुधा' 'इन्दुमती' संस्कृत-हिन्दी टीका विभूषित

इसकी 'सुधा' संस्कृत टीका में प्रत्येक प्रयोग तथा धातुरूपों की परीक्षोपयोगी साधनिका तथा सूत्रार्थोंकी अति सरल व्याख्या की गई है। इस टीका का अध्ययन करने से परीक्षार्थियों को 'प्रश्नोत्तरी' की भी आवश्यकता नहीं पड़ेगी। सभी प्रयोगों की व्याख्या प्रश्नोत्तरलेखन के रूप में ही की गयी है। इसकी 'इन्दुमती' नामक हिन्दी टीकामें टीकाके साथ ही साथ 'नोट' देकर संस्कृत व्याकरण का भी सरल रूपसे ज्ञान कराया गया है जो आज तक किसी भी संस्करण में प्रकाशित नहीं हुआ था। 'हाथ कंगन को आरसी क्या' अक्टूबर सन् १९५० के प्रथम दिवस पर यह संस्करण आपको प्राप्त हो जायगा।

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस।